नृसिंहाश्रमविरचिता

# अद्वैतदीपिका

[तृतीयो भागः]

सम्पादकः
आचार्य श्री एस्. सुब्रह्मण्य शास्त्री

सम्पूर्णानन्द संस्कृत विश्वविद्यालयः
वाराणसी

SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 118 ]

# ADVAITADĪPIKĀ

[ PART THREE ]

OF

NṚSIṀHĀŚRAMA

*With the Commentary*

**Advaitadīpikāvivaraṇam**

BY

NĀRĀYAṆĀŚRAMA

EDITED BY

S. SUBRAHMAṆYA ŚĀSTRI
Śāstracūḍāmaṇi-Professor
Sampurnanand Sanskrit University




VARANASI

1987

Research Publication Supervisor–
Director, Research Institute,
Sampurnanand Sanskrit University
Varanasi.

Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer
Sampurnanand Sanskrit University
Varanasi - 221002.

Available at –
Sales Department,
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi–221002.

First Edition—1100 Copies
Price Rs. 20·00

Printed by—
Ghan Syam Upadhyaya
Manager,
Sampurnanand Sanskrit Vishvavidyalaya Press
Varanasi.

सरस्वतीभवन-ग्रन्थमाला

[ ११८ ]

श्रीनृसिंहाश्रमविरचिता

# अद्वैतदीपिका

[ तृतीयो भागः ]

श्रीनारायणाश्रमविरचिताद्वैतदीपिकाविवरणाख्यटीकया संवलिता


सम्पादकः

**श्रीएस्. सुब्रह्मण्यशास्त्री**

शास्त्रचूडामणि-आचार्यः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये






वाराणस्याम्

२०४४ तमे वैक्रमाब्दे १९०९ तमे शकाब्दे १९८७ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः —
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी ।

प्रकाशकः —
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी-२२१००२.

प्राप्तिस्थानम् —
विक्रयविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी-२२१००२.

प्रथमं संस्करणम्, ११०० प्रतिरूपाणि
मूल्यम्, २०-०० रूप्यकाणि

मुद्रकः —
घनश्याम उपाध्यायः
व्यवस्थापकः,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयीयमुद्रणालयस्य
वाराणसी ।

# FOREWORD

I deem it a great privilege to associate myself with the publication of this third and conclusive Volume of *Advaita-dīpikā* of Nṛsiṁhāśrama by our University. I regard Paṇḍitarāja Brahmaśri S. Subramanya Sastri, the erudite editor of this important Vedantic text, who has made a niche for himself as a pre-eminent scholar of Vedānta, Nyāya and Mīmāṁsā in the country, as my *Vidyā-guru*, though I did not have the opportunity of learning under him as a regular student. But as a student of Vedānta Śiromaṇi class in the Madras Sanskrit College in the late forties and subsequently as a Lecturer in Sanskrit in the Vivekananda College, Madras, I had many opportunities of listening to his learned discourses in Sanskrit on philosophical subjects and his incisive interventions in traditional colloquia. He has been quite a prolific editor of śāstraic texts and it is a privilege to this University to have his association in its publication programmes.

I look upon this opportunity to be providentially linked with this publication as an honour on another count too. Dr. Gaurinath Sastri, my illustrious predecessor in office, who presided over this University for two terms, had contributed the Foreword to the two earlier Volumes of this text and it is a rare pleasure to be able to complete the publication which he started and which received the patronage of another illustrious predecessor the late Pandit Badri Nath Shukla, with whose recent disappearance, I lost a personal supporter in Varanasi and the country, its most eminent Naiyāyika.

Good fortunes too do not come single, on occasions. It is much more than mere, good fortune that this publication is to be released by His Holiness Chandrasekharendra Sarasvati, the Paramācārya of Kanchi Kamakoti Peetha at Kancheepuram in the precincts of the Kanchi Math,

synchronising with the formal ceremony for the award of the Mahāmahopādhyāya degree, *honoris causa* of our University on my revered Guru, Śāstraratnākara Brahmaśṛ S. R. Krishnamurthy Sastrigal, former Professor of Vedānta in Madras Sanskrit College. My sentiments are best expressed by Sri Harsa's well known words, which he used as a refrain of his prefatory verses to his three plays :

वस्त्वेकैकमपोह वाञ्छितफलप्राप्तेः पदं, किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः।

(Each little circumstance here is such that it can independently contribute towards the fulfilment of my desires. How much more should be my delight, when all the blessed factors have come together, by my good fortune ?)

Nṛsiṁhāśrama has a special place of importance in Dvaita-Advaita and Viśiṣṭādvaita-Advaita polemics. He was a recognised authority on Advaita of his days and possibly spent most of his days in this city of Kashi. The best proof of this is the *Vyavasthāpatra* (1657 A. D.) carrying his signature along with those of great luminaries like Gāgābhaṭṭa, Appaya Dīkṣita and Khaṇḍadeva, to which the learned editor called attention in his *Upodghāta* to the first Volume. That Khaṇḍadeva lived and worked in Kashi is vouchsafed by Paṇḍitarāja Jagannātha when he wrote :

देवाध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयम्

Gāgābhaṭṭa, likewise, was also a celebrated resident of Kashi. There are anecdotes about Appaya Dikṣita and Jagannātha, centering round Kashi. As against this proved association of Nṛsiṁhāśrama with Kashi, the present work contains a strange reference which seem to indicate that this work was probably not written in Kashi. In the course of the discussion on Śābdāparokṣa, he writes :

न हि काशीस्थं पदार्थं शब्देन, जानन्, जानामीत्यनुभवन्नपि ममेदानीं काशीस्थः पदार्थोऽपरोक्ष इत्यनुभवति।

Here he speaks of the case of a non-resident of Kashi knowing about a thing in Kashi through second hand reports of others.

*Advaitadīpikā* was, in all probability, one of his mature works. The prevailing tone of this work gives some indications of the confidence of the writer in meeting his opponents. The cases of innuendo, satire and sarcasm in the polemics with his philosophical rivals that we find in this work, throw interesting light on this, The following are some random instances :

(1) There is a fine sense of satiric humour in the peroration contained in the following *parikara-śloka* :

तस्मात्त्वान्यथाख्यातिरन्यथाख्यातिरेव सा ।
विदुषोऽपि हि किं कुर्यास्त्वमीशे विषमेक्षणे ।। (p. 358 Vol. II)

There is a fine piece of suggestion (*dhvani*) here that his unhealthy animosity towards Śiva has brought upon this illusion on him.

(2) There is a similar delightful pun in the peroration of his criticism of the Dvaitin's misinterpretation of तत्त्वमसि by wrong splitting of the words :

तस्मादर्वाचीनं मतमर्वाचीनमेव । (p. 61, Vol. III)

(3) He speaks of Ācārya Rāmānuja as चिरन्तनदास, with an oblique hint of the concept of Kaiṅkarya even after liberation. (pp. 58 and 61, Vol III). Whereas this satire may not transgress the limits of decency; the Commentator Nārāyanāśrama (a direct disciple of the author) violates these limits when he descends to personal reflections in referring to the followers of Ācārya Rāmānuja as श्वेतमृच्छृङ्गधारि as शृङ्गि while commenting on the same passages.

A similar tone of great self-confidence is reflected in these two highly poetic verses, which are prefixed to the third Pariccheda : (pp. 216, 217 of Vol II)

गुरुचरणकृपा मे कञ्चुकीकुर्वती मां
नरहरिचरणेच्छां चारयत्यात्मदुर्गे ।
अहमिति विगताधिः सञ्चराम्यात्मयोग्यं
कपटमतिविलासैर्भेदिभिर्भिन्नमार्गे ॥
निरवधिनिर्मलवर्तिप्रकटनशीलप्रभो गुरोस्स्नेहात् ।
औपनिषदात्मदीपः कुरुतात् कल्याणकारिणीं विद्याम् ॥

The figures, as well as the *Vastu-dhvani* that is enshrined in the figures are worthy of any past master of the poet's craft. The same is true of the effortless *yamaka* in the preceding verse too. It is a little unfortunate that the beauty of these verses has been lost upon the commentator, who has missed even the clear *Vyatireka* in the last verse.

I conclude with my respectful praṇāmas to the learned editor on behalf of the University and crave his indulgence for the delay in releasing this Volume from the Press, where it has been lying for long. But I am confident, that the long wait has been more than compensated by its release at the hands of His Holiness in the precincts of a great seat of Vedānta.

V. VENKATACHALAM
Vice-Chancellor
Sampurnanand Sanskrit University
Varanasi.

Varanasi
18.7.1989
Guru Pūrṇimā (Vyāsa-Pūrṇimā)

# प्रास्ताविकम्

कपिलकणादगौतमव्यासजैमिन्याद्याचार्याणां पद्यायामनितरसाधारणप्रतिभाधना आचार्यशङ्करचरणाः प्रतितिष्ठन्ति दर्शने । परवर्तिविपश्चिदपश्चिमविभावितैः शाङ्करभाष्यव्याख्यानैस्तावदाचार्यचरणलोकोत्तरप्रातिभ्यमञ्जसाभिव्यज्यते। शाङ्करभाष्यमधिकृत्य पद्मपादविरचिता पञ्चदशिकेत्याख्या प्रथमा प्रथते व्याख्या, वाचस्पतिमिश्रप्रणीता भामत्याख्या द्वितीया चकास्तीति विदन्ति तद्विदः। आनन्दगिरिगोविन्दानन्दाभ्यामपि न्यायनिर्णयो रत्नप्रभेति टीके प्रटीकिते शाङ्करभाष्यस्य ।

शाङ्करमतमवलम्ब्य स्वातन्त्र्येण संदृब्धो ग्रन्थो नैष्कर्म्यसिद्धिनामक आचार्यशिष्येण सुरेश्वरेण तच्छिष्येण सर्वज्ञमुनिना प्रणीतं पद्यन्द्धं 'संक्षेपशारीरकम्' इत्यभिधं ग्रन्थं व्याचख्यौ षोडशशततमख्रीस्तशताब्दभवो नृसिंहाश्रमो जगन्नाथाश्रमगीर्वाणेन्द्रसरस्वतीशिष्यः । नृसिंहाश्रमकृता संक्षेपशारीरकतत्त्वबोधिनीत्याख्या व्याख्या सरस्वतीभवनग्रन्थमालायां नवषष्टितमप्रसूनतया पञ्चभागेषु १९३६ तमख्रैस्ताब्दादारभ्य १९४१ तमख्रैस्ताब्दं यावत् प्रकाशमुपेता ।

धर्मराजाद्वरीन्द्र-नारायणाश्रम भट्टोजिदीक्षिता नृसिंहाश्रमस्य प्रमुखाः शिष्याः प्रसिद्धाः सन्ति । अप्पयदीक्षितस्तु नृसिंहाश्रमसमकालिकः । विद्वन्मण्डलीमण्डनस्यास्याद्वैतवेदान्तविषयिणी वैदुषी विश्रुता । नव्यन्यायप्रपुष्टयेदमीयग्रन्थभाषया नृसिंहाश्रमस्यान्यशास्त्रपाटवमपि विज्ञायते ।

जयतीर्थो विद्वान् न्यायसुधाग्रन्थेऽद्वैतवेदान्तसिद्धान्तान् निरास्यत् सोपष्टम्भम् । तन्निराचिकीर्षया नृसिंहाश्रमेण विरचितस्तावद् 'अद्वैतदीपिका' इत्याख्योऽयं प्रकृतो ग्रन्थस्तद्ग्रन्थेषु शीर्षण्यतां भजते । सरस्वतीभवनग्रन्थमालाया अष्टादशोत्तरशततम-

प्रसूनतयाविर्भवन्नयं चतुर्थपरिच्छेदात्मकस्तृतीयो भागः पण्डितराजैः श्री-एस्. सुब्रह्मण्यशास्त्रिवर्यैः सम्पादितो बुधवराणां प्रीणनाय जिज्ञासूनां हिताय च सेत्स्यतीति ध्रुवं मनुते—

| अक्षयतृतीयायां<br>२०४३ वै०<br>वाराणस्याम् | भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'<br>निदेशकः<br>अनुसन्धानसंस्थानस्य |
|---|---|

# अद्वैतदीपिकायां चतुर्थः परिच्छेदः

## उपोद्घातः

इदानीं श्रीनृसिंहाश्रमविरचितायाः अद्वैतदीपिकायाः चतुर्थः परिच्छेदः इदं-प्रथमतया संमुद्रय प्रकाश्यते। अयं च ग्रन्थः जयतीर्थकृतन्यायसुधोक्ताद्वैतदूषणानां समाधानानि वेदान्ताभिमतानि व्यक्तीकुर्वन् अद्वैतशास्त्रस्य यथावदधिगमे महदुपकरोति।

भगवत्पादश्रीशङ्कराचार्या हि श्रुतीनां मुख्यार्थमेव परिगृह्य वेदान्तार्थमुपपादयन्तः श्रुत्यर्थोपपादकान् न्यायांश्च पदे पदे प्रकाशयन्ति "श्रुतेः" इति स्वपक्षसाधकश्रुतिं प्रदर्श्य "उपपत्तेश्च" इति श्रुत्यर्थोपपादकन्यायान् प्रदर्शयन्ति। अत एव श्रीपद्मपादाचार्याः पञ्चपादिकारम्भे 'नमाम्यभोगिपरिवारसंपदं निरस्तभूतिमनुमार्धविग्रहं" इति गुरुं स्तुवन्तः भगवत्पादीयभाष्यमेव तदीयशरीरं तच्चार्धेनानुमानात्मकं अर्धान्तरेण तु श्रुत्यात्मकं इति श्लेषेण सूचयन्ति।

अत एव शांकरोऽभिप्रायः श्रुतिविरुद्ध इति वक्तुमशक्नुवन्तः द्वैतविशिष्टाद्वैतपण्डिताः अद्वैताभिमतप्रक्रियां खण्डयितुं प्रयतन्ते। 'एकमेवाद्वितीयं ब्रह्म' 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाऽभिवदन्यदास्ते' इति 'अनेन जीवेनात्मनाऽनुप्रविश्य' इत्यादिश्रुतिभिः प्रतिपादितवेदान्ततत्त्वं केनाप्यपलपितुं न शक्यते। यद्यपि प्रत्यक्षेण द्वैतमेवात्रगम्यते नाद्वैतं तथापि प्रत्यक्षात् बहुशः दृष्टविपर्ययात् अपौरुषेयं अप्रामाण्यलेशेनाप्यकलङ्कितं शास्त्रं प्रबलं प्रत्यक्षं बाधित्वा स्वप्रमेयं व्यवस्थापयति-यथा प्रत्यक्षतो जीवभेदः प्रतीयते प्रतिशरीरं सुखदुःखादिभेदात्। शास्त्रं तु "एको देवः सर्वभूतेषु गूढः" इत्यादिश्रुत्या जीवाभेदमाह। तत्र शास्त्रप्राबल्यं प्रत्यक्षं तु औपाधिकभेदमादाय निर्वोढुं शक्यते। मतान्तरीयास्तु शास्त्रापेक्षया प्रत्यक्षं प्रबलं वदन्तः प्रत्यक्षानुसारेण शास्त्रस्य गौणार्थेन निर्वाह इत्याहुः। अत एव तेषां 'तत्त्वमसि' वाक्यस्य तदीयस्त्वमसीत्यर्थः अथवा अतत्त्वमसीति विगृह्य जीवात् ब्रह्मणो भेद इति द्वैतिनः। विशिष्टाद्वैतिनस्तु त्वंपदस्य जीवशरीरकार्थत्वमाहुः वेदान्तप्रक्रिया अपि प्रत्यक्षानुमानाद्यविरोधेन समर्थयितुं शक्या एवेति प्रदर्शयितुं तत्र भवन्तः श्रीनृसिंहाश्रमिणः श्रीमधुसूदनसरस्वत्यश्च प्रायतन्त उपपादयांचक्रुश्च। यत्तु व्यावहारिकसत्तामादाय लोकव्यवहारोपपत्तिरिति नानुमन्यासहे सत्यस्यैकत्वात् सत्यभेदासंभवात् "सत्यभेदः कुतोऽन्वयं" इति भट्टपादा, इत्याहुः। तन्न। व्यावहारिकसत्यमित्यस्य सत्यत्वेन व्यवहारमात्रं इत्यर्थः। सचाङ्गीकर्तव्य एव। भेदमेव तावद्विमृशामः। घटे पटभेदः पटे घटभेदश्च लोकप्रसिद्धः। तत्रायं प्रश्नः भेदस्य घटस्य चैक्यं

वा भेदो वा ? इति । तत्र किं समाधानं भेद इत्युक्तौ तस्यापि घटाद्भेदान्तरं भेदभेदस्याप्येवमित्यनवस्था । यद्यभेदः तर्हि घटपटयोरप्यभेदः प्राप्तः । अतः भेदस्य दुर्निरूपत्वात् केवलं व्यवहारमात्रं विषयरहितं वाच्यम् । एवं स्नानादिना मलमूत्रादिपूर्णस्य देहस्य का शुद्धिः सुरापूर्णवटवदशुद्धस्य ? व्यवहरमात्रमित्येव युक्तं, मृद्घटयोः भेदे तोलने द्विगुणं गुरुत्वं स्यात् मृद्घट इति प्रत्ययो न स्यात् अभेद एव तु वास्तविकः भेदस्तु व्यवहारमात्रमित्यभ्युपेयम् ।

आधुनिकव्यवहारे पत्रे कस्मिंश्चित् एकरूप्यकं इति सर्वकारीयाः मुद्रापयित्वा प्रयच्छर्न्ति । रूप्यमिति पत्रमेव व्यवहरामः । तादृशपत्रशतं शतरूप्यकं इति व्यवह्रियते न चैतद्रूप्यं, सादृश्यस्याप्यभावात् । अतः रूप्यव्यवहारमात्रमिदमिति स्पष्टम् । न चात्र धारकस्य रूप्यं दीयेत-अनुक्तेः ।

एवमेव सर्वस्य लोकव्यवहारस्य कर्मकाण्डस्य स्वर्गादेः सत्यलोकान्तस्य व्यावहारिकसत्यत्वमेव । प्रारमार्थिकंतु ब्रह्मैव श्रुतौ नेह नानास्ति किञ्चन, यत्र "हि द्वैतमिव भवति तदितर इतरं पश्यति" विद्वान् नामरूपाद्विमुक्तः सत्यं चानृतं च सत्यमभवत् इत्यादिवाक्येभ्य प्रपञ्चस्य मिथ्यात्वावगमात् । अत्रैवं श्रीनृसिंहाश्रममुनिभिः अद्वैतकण्टकानामुद्धारे कृतेऽपि केचन त्रिदण्डिमतमाश्रिताः ब्रह्मसूत्राणामद्वैतपरत्वं स्पष्टं प्रतीयमानमपि भाष्यकारादिभिः सुष्ठूपपादितमपि खण्डयितुं प्रयतन्ते । तच्चात्र विमृश्यते । अद्वैतदीपिकायाः उपोद्घलनाय । तथाहि---अथातो ब्रह्मजिज्ञासा इति प्राथमिकं सूत्रम् । इदं च विषयप्रयोजनसंबन्धाधिकारिणां सूचकमिति सर्वेषामभ्युपगमः । अत्र च सूत्रादेव ब्रह्म विषय इति ज्ञायते । तस्य ज्ञानाय विचारः क्रियते । ब्रह्मज्ञानमेव न फलं सुखदुःखनिवृत्त्यन्यतरत्वाभावात्—अपि तु मोक्षः फलं तत्साधनत्वाच्च ब्रह्मज्ञानं फलमिति । फलाध्याये तथैवचारंभ एव स्पष्टमुच्यते सूत्रकृता—तथाहि-सम्पद्याविर्भावः स्वेन शब्दात् इति तत्र प्रथमं सूत्रं-तदर्थश्च एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते इति छान्दोग्यश्रुतौ स्वेन रूपेणाभिनिष्पद्यते—स्वस्वरूपं परं ज्योतिः ब्रह्म साक्षात्कृत्य इति । तथा च स्वस्वरूपाविर्भावो मोक्ष इति फलितम् । तस्य मोक्षत्वं तु मुक्तः प्रतिज्ञानात्' इति द्वितीयसूत्रेणावगम्यते । यदि आविर्भावो मोक्षः स्यात् तदा अनाविर्भावो बन्ध इत्यर्थात् सिद्धम् । अनाविर्भावश्च जीवस्य ब्रह्मरूपाच्छादकेनाज्ञानेनेति वक्तव्यं[1] अत एव अविद्यावरणमेव बन्धःतन्निवृत्तिश्च मोक्ष इति सिद्धम् । तन्निवृत्तिश्च ब्रह्मज्ञानादेवेति स्पष्टम् यतः शास्त्रं ब्रह्मज्ञानायारब्धं तेन च निवर्त्यं अज्ञानं, समानविषयकयोरेव च ज्ञानाज्ञानयोः निवर्त्यनिवर्तकभाव नियमात्; ब्रह्मज्ञानस्य जीवस्वरूपाच्छादकाज्ञानस्य चैकविषयकत्वं विना तदनुपपत्तेः जीवब्रह्मणोरैक्यं तस्यैवास्मिन् शास्त्रे विषयत्वं च सूचयति । अतः प्रथमसूत्रादेव जीवब्रह्मैक्यरूपविषयः सिद्ध्यति । प्रयोजनं च अज्ञानरूपबन्धनिवृत्तिरिति सिद्धं भवति ।

---

१. अज्ञानेनावृतं ज्ञानं (गीता) ।

यत्तु श्रीमहाविष्ण्वधिष्ठितवैकुण्ठाख्य ब्रह्मलोकप्राप्तिरेव मोक्ष इति वैष्णवोक्तं तदेतेन निरस्तम् ।

यतो न वयं वैकुण्ठप्राप्तिं तस्य साधनभूतां ब्रह्मोपासनां च निराकुर्मः अपि तु वैकुण्ठप्राप्तिर्न मोक्षः आत्यन्तिकः । अपि तु सशरीरत्वात् शरीरवतश्च "नवै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः" इति श्रुत्या वैकुण्ठवासिनामपि शरीराभिमानवत्त्वात् दुःखसंभवात् जयविजयादिवत् तेषामपि पुनरावृत्तिसंभवात् न मुख्यो मोक्षः, अनावृत्तिवचनमस्मिन् कल्पेऽनावृत्तिविषयमिति ब्रूमः ।

यत्तु स एनान् ब्रह्म गमयति इति श्रुतौ ब्रह्मलोकात् विद्युल्लोकमागतेनामानवपुरुषेण नीयमानपुरुषैः प्राप्यं ब्रह्म ब्रह्मलोकस्थं परब्रह्मैव न तु कार्यं ब्रह्म इति त्रिदण्डिनः आहुः । तत्रेदं विचारणीयम् कार्यं बादरिरस्य गत्युपपत्तेः इति सूत्रं पूर्वपक्षसूत्रं परं जैमिनिर्मुख्यत्वादिति सिद्धान्तसूत्रमिति च शैवत्रिदण्डिभास्करमतानुसारिणां वैष्णवत्रिदण्डिनां च मतम् । भगवत्पादैस्तु 'कार्यं बादरिः' इत्यादिसूत्रं सिद्धान्तः । परं जैमिनिर्मुख्यत्वादिति पूर्वपक्ष इत्यभिधीयते । भगवत्पादैः कार्यब्रह्मणः सत्यलोकस्थस्य गन्तव्यत्वोपपत्त्या कार्यब्रह्मविषया गतिश्रुतिः । तेन च परब्रह्मणः गन्तव्यत्वानुपपत्तिः सूच्यते । तच्च "अत्र ब्रह्म समश्नुते" 'ब्रह्मविद्ब्रह्मैव भवति' इत्यादिश्रुत्यनुगुणं भवति । परं ब्रह्म तु सर्वगतत्वात् न गमनप्राप्यम् । अतः तत्र गमयतिशब्दोऽनुपपन्नः । यद्यपि ब्रह्मशब्दः मुख्यवृत्त्या परं ब्रह्मैवाचष्टे तथापि अनन्यथासिद्धलिङ्गापेक्षया श्रुतेः दुर्बलत्वादत्र गतिप्राप्यत्वलिङ्गस्यानन्यथासिद्धत्वात् लिङ्गमेव प्रबलम् । यथा आकाशस्तल्लिङ्गात् इत्यत्र लिङ्गस्य सर्वभूतोत्पत्तिस्थितिलयाधिष्ठानत्वरूपस्यानन्यथासिद्धस्य प्रबलत्वादेव आकाशपदप्रतिपाद्यं ब्रह्म न भूताकाश इति निर्णीतं आकाशस्तल्लिङ्गादित्यधिकरणे ।

मीमांसकाश्च 'हस्तेनावद्यति स्रुवेणावद्यति स्वधितिनाऽवद्यति इति विधिभिः अवदानशब्दश्रुत्या सर्वेष्ववदानेषु त्रयाणां साधनत्वबोधनेऽपि हस्तादिगतानन्यथासिद्धसामर्थ्यानुसारेणैव तत्तच्छ्रुतिगतानां अवदानपदानां संहतावदान-आज्यावदान-मांसावदानपरत्वं व्यवस्थापितं सामर्थ्याधिकरणे ( पू: मीमांसायां प्रथमाध्यायान्त्याधिकरणे ) यत्तु कार्यब्रह्मणोऽपि सर्वगतत्वेन तस्यापि गन्तव्यत्वमनुपपन्नमिति भास्करेण प्रलपितं तन्न कार्यपदेन ब्रह्मलोकगतसशरीरचतुर्मुखाभिधानात् तस्य चअसर्वगतत्वात् गन्तव्यत्वोपपत्तिरेव ।

तस्मात् मोक्षः स्वस्वरूपाविर्भाव एव सूत्रकारसंमतः ब्रह्मलोकप्राप्तिः वैकुण्ठप्राप्तिरपि न मोक्षः तत्प्राप्तानां मोक्षानभिधानात् अनावृत्तिःशब्दात् इत्यनेनापुनरावृत्तेरेवाभिधानात् ।

अनावृत्तिश्च ब्रह्मलोकं प्राप्तानां ब्रह्मलोक एव ब्रह्मणा सह ब्रह्मविचारं कृत्वा ब्रह्मसाक्षात्कारप्राप्तिसंभवात् तत्रैव मोक्षप्राप्त्या संगच्छत एव । अत एव प्रश्नोपनिषदि

स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते— इत्यत्र ब्रह्मलोकप्राप्त्यनन्तरं प्रयत्नान्तरेण ब्रह्मसाक्षात्करणमुक्तम् । यदि च परपुरुषोपासकस्य ब्रह्मलोकप्राप्तिरिष्टा सैव मुक्तिरिति च मतं तदा ब्रह्मलोकंप्राप्तस्य तत्रत्यचतुर्मुखब्रह्मणः 'दर्शनमयत्नसिद्धमिति प्रयत्नान्तरकरणेन पुरुषमीक्षते इति वचनमनर्थकमापद्येत । तस्मात् कार्यब्रह्मप्राप्तिरेव सिद्धान्तपक्षः मुख्यब्रह्मणस्तु अत्रैव साक्षात्कारात् अत्रैव ब्रह्मप्राप्तिः सा च संपद्याविर्भावः स्वेन शब्दादिति चतुर्थाध्याय चतुर्थपादे आदावुच्यते ।

## जन्माद्यस्य यतः

इदमपि सूत्रमद्वैतं ब्रह्म गमयति । यतः जगज्जन्मादिहेतुत्वमुक्त्वा तच्च हेतुत्वं प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादित्युक्तेः उपादानत्वं निमित्तत्वं च । उपादानत्व च न परिणामित्वं तस्य कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा इत्युक्तेः, अस्यार्थः— यदि कृत्स्नं ब्रह्म जगदाकारेण परिणमते तदा अयत्नदृष्टत्वात्प्रपञ्चरूपब्रह्मणः ब्रह्मजिज्ञासा व्यर्था स्यात् यद्येकदेशेन परिणमते ब्रह्म तदा ब्रह्मणः सावयवत्वं 'निष्कलं' ब्रह्मेति श्रुतिविरोधश्च इत्युक्त्वा श्रुतेस्तु शब्दमूलत्वात् आत्मनि चैवं विचित्राश्च हि इति सूत्राभ्यां स्वप्ने आत्मनि स्वरूपानुपमर्दनेन स्वाप्नप्रपञ्चसृष्टिदर्शनात् तद्वदेव प्रपञ्चसृष्टिः ब्रह्मणो मायामयी अतथ्यरूपेति विवर्तवाद उक्तः । अतः विवर्तोपादानभूतं ब्रह्म अद्वितीयमिति प्रपञ्चाभावोपलक्षितब्रह्मवादः द्वितीय सूत्रार्थः इत्यागतम् ।

विवर्तोपादानत्वं च स्वासमसत्ताककार्यजनकत्वं यथा शुक्तेः रजतं प्रति । तथा च प्रपञ्चस्य ब्रह्मभिन्नसत्ताकत्वेन मिथ्यात्वात् उपादानं शुद्धमद्वितीयं ब्रह्मेति सिद्धम् । प्रपञ्चस्य मिथ्यात्वं चात एव सिद्धमित्यद्वैतम् ।

## शास्त्रयोनित्वात्

इदमपि सूचयत्येवाद्वैतम् । योनिशब्दः योनिश्च हि गीयते इत्युत्तरत्र प्रथमाध्यायोपान्त्यसूत्रेणोपादानपरः प्रयुक्तः । अतोऽत्राप्युपादानत्वपरत्वे कृत्स्नप्रसक्त्यधिकरणन्यायेन विवर्तोपादानत्वमेव वक्तव्यं तेन ब्रह्मणः अद्वितीयत्वं प्रपञ्चस्य विवर्तत्वेन मिथ्यात्वं च सिद्धम् ।

यदि तु योनिः प्रमाणं इत्यर्थे शास्त्रप्रमाणकं ब्रह्मेत्यर्थः आश्रीयते तदा शास्त्रस्य एकमेवाद्वितीयं नेह नानास्ति किञ्चन इत्यादिना अद्वैतपरता सुस्थिता । शास्त्रदृष्ट्येति सूत्रेण अहं ब्रह्मास्मि इति ज्ञानस्योक्तत्वाच्च ।

## तत्तु समन्वयात्

सम्यगन्वयः समन्वयः सम्यक्त्वं च तात्पर्यविषयत्वद्योतकम् । तथा चोपक्रमादिषड्विधतात्पर्यलिंगैः अद्वैतबोधनात् अद्वैततात्पर्यकमित्यर्थः ।

यत्तु विशिष्टाद्वैतिभिः स्वाप्नप्रपञ्चस्यापि सत्यत्वोपगमात् न विवर्तोपादानत्वं सूत्रकारसंमतमिति । तन्नचारु । एवं सति कृत्स्नं ब्रह्म परिणमते एकदेशो वा उभयथापि ब्रह्मोपादानकत्वासंभवाक्षेपस्य परिहारालाभात् । स्वाप्नप्रपञ्चेऽपि आक्षेपस्य तुल्यत्वात् । यद्यपि सर्वा उपनिषदः द्वितीयाभावोपलक्षितं जीवाभिन्नं ब्रह्म बोधयन्त्येव तथापि छान्दोग्यषष्ठे स्पष्टत्वादुपपाद्यते—तथाहि—एकविज्ञानेन सर्वविज्ञानं प्रतिजज्ञे उद्दालकः शिष्याय–उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति इत्यादिना । समाधानकाले च यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादित्युक्त्वा विकारस्य केवलं नाममात्रत्वं न तु वस्तुत्वमिति चोपपाद्य मृत्तिकेत्येव सत्यमित्यनेन मृद एव घटादेः पारमार्थिकं रूपं तज्ज्ञानेन घटशरावादयो विकाराः ज्ञाता एव भवन्तीत्युक्त्या जगदुपादानं ब्रह्मैव सत्यं प्रपञ्चःमिथ्या उपादानज्ञानेन विकारभूतं जगत् तत्त्वतो ज्ञातमेव भवतीत्युक्त्या प्रपञ्चमिथ्यात्वं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमुक्तं भवति । जीवराशेस्तु अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति द्ब्रह्मणः संकल्पात् ब्रह्मण एव जीवरूपत्वात् उत्तरत्र तत्सत्यं स आत्मा तत्त्वमसि इत्युपदेशे जीवस्य ब्रह्मात्मता निर्देशपूर्वकं यत् प्रविष्टं जीवरूपेण स्थितं तत्त्वमसि इत्युक्तेः जीवब्रह्माभेदः सुस्पष्टः । न चातत्त्वमसि इति पदच्छेदो युक्तः तथा सति प्रतिज्ञातस्य एकविज्ञानेन सर्वविज्ञानस्यासंभवविरोधापत्तेः । नापि त्वच्छरीरकं तत् इति विशिष्टाद्वैतिनां व्याख्या युक्ता तत्त्वमस्तीत्यापत्तेः । त्वच्छरीरकं तत् इत्यर्थांगीकारात् । एवं ऐतरेयके स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत–सजातो भूतान्यभिव्यैख्यत् । किमिहान्यं वावदिषदिति–स एतमेव ब्रह्म ततममपश्यत् इति जीवस्य ब्रह्माभेददर्शनमनुमोदते ।

[1]आनन्दमयाधिकरणम्—तत्रानन्दमयो न ब्रह्म किन्तु मोदप्रमोदानन्दरूपै उपचयापचयापन्नैः आनन्दैः युक्तो जीव एव, तस्य प्रतिष्ठा अधिष्ठानं पुच्छब्रह्म, प्रतिष्ठात्वं च तत्र जीवोपाधेः कल्पितत्वेन विशिष्टस्य कल्पितत्वादुपपन्नम् । अत एव "यदा ह्येवैष एस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने अभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति" इत्यत्र जीवस्येश्वराभेदप्राप्त्या अभयं; यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते

---

१—स्वाप्ययादिति सूत्रमपि जीवब्रह्मैक्यस्य साक्षाद्बोधकम् । सुषुप्तौ जीवः ब्रह्मणि लीयते ब्रह्मरूपो भवतीति प्रसिद्धिः स्वं रूपं अप्येति इति स्वपितीत्युच्यते । न च पुरुषपदेन जीवशरीरकं ब्रह्मोच्यते तस्य सुषुप्तिकाले विषयासंगविरहितरूपेणावस्था । स्वापः इति तत् यदासुप्तः स्वप्नं न पश्यति अथास्मिन् (पुरुषे) एकधाभवति इत्यादौ स्वप्नद्रष्टृपुरुषस्यैव स्वापे एकीभावोक्तेः यद्यपि ब्रह्मण्येकीभावः जाग्रदवस्थायामप्यस्ति तथापि तदा शरीरेन्द्रियाद्यभेदभ्रमात् न सुव्यक्त एकीभावः न च एकीभावः द्वयोःसंभवति स्थिते द्वित्वे तदसंभवात् अतः मन आदिवृत्त्युपरम एवैकीभावः ।

इत्युत्तरवाक्येन अल्पमपि भेदं यदा कुरुते तदा तस्य भयं इत्युक्तेः पूर्ववाक्ये अभय-प्रतिष्ठा अभेदज्ञानमित्यवगम्यते । अतः तैत्तिरीयानन्दवल्ली समग्रा अद्वैतपरेति सिद्धम् । प्राणाकाशज्योतिरधिकरणानि सगुणविषयाणि अन्ते प्राणाधिकरणे "मामेव विजानीहि" ति इन्द्रोपदेशात् प्राप्तं इन्द्रस्योपास्यत्वमस्मिन् वाक्येभाति । तत्परिहाराय सूत्रं शास्त्र-दृष्ट्या तूपदेशो वामदेववदिति ।

अत्र शास्त्रं तत्त्वमसि अहं ब्रह्मास्मि इत्यादिमहावाक्यम् तस्यैवेतरः कर्मकाण्डः उपासनाकाण्डो वा उपकारकः न तु स्वातन्त्र्येण परमपुरुषार्थहेतुः । तादृशज्ञानेन संपन्न इन्द्रः अहं ब्रह्मेति दृष्ट्या मामेव विजानीहीत्युवाच । अतः नेन्द्रस्य द्रष्टव्यताप्रसक्तिः । अत्र अहं ब्रह्मास्मीति महावाक्यस्य शास्त्रत्ववचनात् जीवब्रह्मैक्यमेव शास्त्रार्थः आपतति ।

द्वितीयपादः प्रायशो न ज्ञेयब्रह्मपरः अपि तु उपास्यब्रह्मपरः । उपासनायां भेदस्यावश्यकत्वात् । तत्र च कर्मकर्तृव्यपदेशाच्च शारीरश्चोभयेऽपि हि भेदेनैन मधीयते इत्यादौ उपास्यनिर्णयार्थत्वात् जीवस्यानुपास्यत्वे हेतुरुच्यते । अन्तर्यामी अन्तर्यमनगुणवान् सविशेषं ब्रह्म न निर्विशेषम् । विशेषणभेदव्यपदेशाभ्यां च नेतरौ इत्यत्रापि जीवो न भूतयोनिः यतः दिव्यो ह्यमूर्तः इति भेदकं विशेषणं । अप्राण इति जीवाद्भेद निर्देशश्च । जीव; सोपाधिः तस्माद्भिन्नं ब्रह्म न ब्रह्मणो भिन्नो जीवः ।

द्युभ्वाद्यधिकरणे ब्रह्म जीवाद्भिन्नं शुद्धत्वात् जीवेन ज्ञेयत्वात् जीवाधिष्ठानत्वाच्च । न जीवो ब्रह्मभिन्नः इति रीत्या औपाधिकात् शुद्धस्य पृथक् सत्त्वं बोधयति । जीवस्ये-श्वरांशत्वं चोपाधित इति यथाह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपः देवः क्षेत्रेष्वेवमजोऽयमात्मा इति श्रुत्या आभास एव च इत्यादिसूत्रेण च सिद्धम् । अंशत्वं च प्रतिबिंबरूपत्वमित्येतत् अंशाधिकरणसिद्धान्त-स्थितेन आभास एव चेति सूत्रेणैव सिद्धम् ।

उत्तराच्चेदाविर्भूतस्वरूपस्तु इति सूत्रमपि जीवस्य अनौपाधिकं शुद्धं रूपं ब्रह्मेति सूचयति । तथाहि---दहराधिकरणे दहराकाशो ब्रह्मेति प्रत्यतिष्ठपत् सूत्रकारः । दहर उत्तरेभ्यः इत्यारभ्य इतरपरामर्शादिति चेन्ना संभवात् इत्यन्तात् सूत्रसंघात् । ततः "य आत्माऽपहतपाप्मा" इत्यादिना अपहतपाप्मत्वादिगुणाष्टकं जीवेऽपि संभवति इन्द्राय तादृशगुणविशिष्टस्यैव जीवत्वेन प्रतिपादनात् तथा च दहरो जीव इति शङ्कां 'उत्तराच्चेत्' इति सूत्रांशेनोक्त्वा आविर्भूतस्वरूपस्तु इत्यंशेनाविर्भूतस्वरूप एव जीवस्तत्र कीर्तितः स च ब्रह्मैव नातो जीवपरं दहरवाक्यमिति सिद्धान्तितम् ।

आविर्भूतस्वस्वरूपो जीवः ब्रह्मैव अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष इति परत्र तस्य उत्तमपुरुषपरमात्माभेदप्रति-पादनात् । संपद्याविर्भावः स्वेन शब्दात् इति सूत्रेणाविर्भूतस्वरूपमनूद्य तस्य मुक्तः प्रतिज्ञानात् इति तदनन्तरसूत्रेण मुक्तत्वप्रतिपादनात् । एवं चात्र जीवब्रह्माभेदः समर्थितो भवति ।

**सुषुप्त्युत्क्रान्त्योर्भेदेन** इति सूत्रमपि जीवब्रह्माभेदं स्पष्टं वदति। सुषुप्तौ तावत् प्राज्ञेनात्मना संपरिष्वक्तः इति श्रुतिः प्राज्ञस्य परमात्मनः आत्मनापदेन जीवस्वरूपत्वं वदति। उत्क्रान्तावपि प्राज्ञेनात्मनाऽन्वारूढः इति परमात्मना स्वात्मरूपेणाधिष्ठितः शब्दं कुर्वन् उत्क्रामतीति प्राज्ञस्य स्वात्माभेदं वदति—अतः जीवस्य ब्रह्माभेदः। एवं त्रयाणामेव चैवमुपन्यासः प्रश्नश्चेत्यानुमानिकाधिकरणसूत्रे कठोपनिषदि अग्नि-जीवपरमात्मनामेव वक्तव्यत्वेन प्रश्नः उत्तरं चेत्युक्त्या त्रयाणामेव चैवमुपन्यासः प्रश्नश्च—इति सूत्रमपि जीवब्रह्माभेदे प्रमाणम्। तथाहि—मृत्युःकिल नचिकेतसे त्रीन् वरान् प्रददौ तत्राद्येन पितृसौमनस्यं द्वितीयेनाग्निविद्यां तृतीयेन च शरीरव्यति-रिक्तात्मानं च ज्ञातुमियेष। न चैवं सति अन्यत्र धर्मादन्यत्राधर्मादिति चतुर्थप्रश्ना-संगतिरिति वाच्यं। तृतीयप्रश्नविषयस्य जीवस्यैव शुद्धस्वरूपज्ञानाय प्रश्नकरणात्। प्रश्नस्य भिन्नविषयत्वे त्रीन् वरानित्यस्यानुपपत्तेः। अत एव सूत्रे त्रयाणामेवैवमुपन्यासः प्रश्नश्चेति प्रश्नतत्प्रतिवचनोपन्यासयोः त्रयाणामित्युक्तिः संगच्छते। पितृसौम-नस्यस्यात्र ग्रहणे उपन्यासः प्रश्नश्चेत्युक्तेरनुपपत्तेः पितृसौमनस्ये उपन्यासाभावात्। तथा च अन्यत्र धर्मादित्यादेः जीवविषयत्वं विना न गतिः। स एव जीवः शुद्धः उत्तरत्र प्रणवार्थत्वेन, तथा इन्द्रियाद्यनुक्रमेणोपर्युपरि उत्कृष्टवस्तु प्रस्तुत्य सा काष्ठा सा परा गतिः इति ब्रह्मण एवोपसंजहारेण च ब्रह्म। एवं च शरीरव्यतिरिक्तत्वेनोप-क्रान्तस्य जीवस्यैव ब्रह्मणा उपसंहारात् अद्वैतसिद्धिः। यदेवेह तदमुत्र यदमुत्र तदन्विह। मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति" इति जीवब्रह्माभेददर्शिनः मरणान्मरणं भवतीत्युक्तिश्च संगच्छते। एवं "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य स एवाद्य स उ श्वः" इति अंगुष्ठमात्रस्येशानाभेदप्रतिपादनं, अन्ते च अंगुष्ठ-मात्रः पुरुषो जनानां हृदये सन्निविष्टः। तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण। तं विद्याच्छुक्रममृतमिति—इत्यत्र जीवं धैर्येण शरीरात् पृथक्त्वेन ज्ञात्वा तं च शुक्रममृतं ब्रह्मेति विद्यात् इत्युपदेशः उक्तमेवार्थं द्रढयति।

**जगद्वाचित्वाधिकरणे** च अन्यार्थं तु जैमिनिरिति सूत्रे उदाहृतः क्वैष तदाऽभूत् कुत एतदागादिति प्रश्नः; समाधानं च यदा सुप्तः स्वप्नं न पश्यति **अथास्मिन् प्राण एवैकधा भवति** इति। अत्र एकीभावः भेदकोपाधिरूपान्तःकरणाभावात्। अत्र च प्राणो ब्रह्म अत एव प्राण इति न्यायात्। तथा स्वाप्ययसूत्राच्च। तथा एतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवाः देवेभ्यो लोकाः इति प्रपञ्चोत्पत्तिःसमाम्नायते एतस्मादात्मनः जगदुत्पत्तिश्रवणात् पूर्वत्रात्मशब्देन जीवस्यैवाभिधानात् जगत्कारणे जीवे समन्वय उक्तः। अत एव जीवब्रह्माभेदः।

**अवस्थितेरिति काशकृत्स्नः**—इदं शंकाविशेषसमाधानार्थं सूत्रम्। शंका च मैत्रेयीब्राह्मणस्य परमात्मपरत्वांगीकारे प्रियसंसूचितेन लीवात्मना उपक्रमो न संग-च्छते इति। अत्र त्रिविधसमाधानेषु अन्तिमं अवस्थितेरिति। ब्रह्मणः जीवरूपेणावस्थिते

रित्यर्थः। न च जीवे ब्रह्मणः अवस्थितेरिति अत्योक्तं युक्तम् प्रकृतशङ्कायाः समाधानाभावात्। परमात्मपरत्वे स एवादौ प्रस्तोतव्यः तदाधारप्रस्तावो न युक्तः। अपि च पूर्वसूत्रे उत्क्रमिष्यत एवंभावादित्यौडुलोमिः इति उत्क्रान्तिकाले जीवस्य मोक्षे ब्रह्मभावो भवेत् तदर्थं जीवोपक्रम इत्युक्तम्। तदनन्तरसूत्रस्य तु एवंभावेनावस्थितेरिति ऋज्वो व्याख्या। पूर्वोक्तशंकासमाधानं चेति समञ्जसम्। तदनेनापि सूत्रेण जीवब्रह्माभेदः शास्त्रार्थः।

**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्।** इदमपि सूत्रमद्वैतं शास्त्रसम्मतमाह—अत्र प्रकृतिः उपादानं, ब्रह्म तु प्रकृतिः निमित्तं च। प्रकृतित्वं च विवर्तोपादानत्वं नतु परिणाम्युपादानत्वम्। तथा सति कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा इति सूत्रोक्तदोषापत्तेः। अतः विवर्तोपादानं ब्रह्म तेनाप्यद्वैतसिद्धिः। एकविज्ञानेन सर्वविज्ञानं—दृष्टान्तः यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादित्युक्त्वा मृत्तिकेत्येव सत्यं इत्याह। तेन मृदादीनामसत्यत्वं अधिष्ठानस्य सत्यत्वमुक्तम्।

**आत्मकृतेः परिणामात्।** तदात्मानं स्वयमकुरुत इत्यत्र एकस्यैवात्मनः कर्मत्वं कर्तृत्वं च कथमिति प्रश्नस्योत्तरं परिणामात् इति। परिमाणशब्दः स्वसमसत्ताकान्यथाभावपरः यथा रज्जुः सर्पात्मना परिणत इति। आत्मनः सांख्योक्तपरिणामवादांगीकारे निर्विकारत्वश्रुतिविरोधः कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा इत्यादिसूत्रविरोधश्च। अतः विवर्तवाद एवाभिप्रेतः।

## द्वितीयाध्याये प्रथमःपादः

**तदनन्यत्वमारंभणशब्दादिभ्यः**—इति सूत्रात् प्रपञ्चस्य ब्रह्मानन्यत्वं ब्रह्मव्यतिरेकेणाभावः मिथ्यात्वमिति यावत्। तद्बोधनेन च निष्प्रपञ्चमद्वितीयं जीवाभिन्नं ब्रह्मेति निर्णीयते।

**इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः** इत्यधिकरणे तत्त्वमसीति जीवब्रह्माभेद निर्देशात् जीवाभिन्नं ब्रह्म कुतो न स्वस्य हितं करोति अहितं च संसारं सृजति इति पूर्वपक्षे अधिकं तु भेदनिर्देशादिति समाधानं; तत्राधिकशब्दः नान्यपरः अपि तु अधिकोपाध्यवच्छिन्नत्वेन स्वातन्त्र्यपरः इत्युक्त्या जीवब्रह्माभेदः दृढीक्रियते। मतान्तरे तत्त्वमस्यादेरन्यार्थत्वात् इतरव्यपदेशाभावात् पूर्वपक्षासंगतिः।

**कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा** इत्यधिकरणे कृत्स्नस्य ब्रह्मणः प्रपञ्चाकारेण परिणामः उतैकदेशस्य? नाद्यः प्रपञ्चातिरिक्तब्रह्माभावात् उपासनाविधीनां वैयर्थ्यप्रसंगः एकदेशपरिणामेब्रह्मणःसावयवत्वप्रसंगः; निष्कलं इति श्रुतिविरोधः इति पूर्वपक्षसमाधानं आत्मनि चैवं विचित्राश्च हि इति सूत्रेण। स्वप्नदृशि मिथ्याभूतपदार्थदर्शनवत् ब्रह्मणि प्रपञ्चमिथ्यात्वं च स्पष्टमुच्यते।

(तृतीयपादे) वियत्पादे वियदुत्पत्तिसाधकं प्रतिज्ञाऽहानिःअव्यतिरेकात् इति सूत्रम्। अयमस्यार्थः एकविज्ञानेन सर्वविज्ञानं मुण्डके छान्दोग्ये बृहदारण्यके च श्रूयते तत्कथमुपपद्यत इति चेत् अव्यतिरेकादिति व्यतिरेकेणाभावात् ब्रह्माव्यतिरेकेण प्रपञ्चाभावात् ब्रह्मज्ञानेन वियदादीनां ज्ञानं जायत एव। तेषां त्वं ब्रह्मैवेति ते तत्त्वतो ज्ञाता एव भवन्ति इति समाधीयते। तेन प्रपञ्चमिथ्यात्वं सिद्धम्।

यावद्विकारं तु विभागो लोकवत् (२-३-७)।

अत्र वियदुत्पत्ति साधकमनुमानमुच्यते वियत् उत्पद्यते विभक्तत्वात् इति प्रयोगः अधिष्ठानसमसत्ताकभेदोहेतुः तेन ब्रह्मणि न व्यभिचारः। अनेन ब्रह्मान्यत् सर्वं विकार इत्यागतम्। उत्पद्यमानं च सर्वं ब्रह्मण उपादानादेवोत्पद्यते। यतो वा इमानि भूतानि जायन्ते इति श्रुतेः। ब्रह्मणः उत्पद्यमानं च ब्रह्मव्यतिरेकेण नास्ति प्रतिज्ञाहानिरव्यतिरेकात् इति न्यायात् तथा च प्रपञ्चमिथ्यात्वसिद्धिः।

अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ३-३-४३

अत्र जीवः ईश्वरस्यांश इति निरूप्यते अंशत्वं नावयवत्वं ब्रह्मणः निष्कलत्वश्रुतेः। अपितु औपाधिकः अग्नेः विस्फुलिंगवत्। तत्र संमतिः ब्रह्मदासा ब्रह्मदाशा ब्रह्मैवेमे कितवा इत्यादिमन्त्राः आथर्वणिकपिप्पलादशाखायां ब्रह्मसूक्ते। तथा श्वेताश्वतरे त्वं पुमानसि इत्यादिः ब्रह्मैव तत्तद्रूपेण दासकितवस्त्रीपुरुषरूपेण तिष्ठतीत्युक्तेः—अतो जीवब्रह्मैक्यं स्पष्टम्। आभास एव च २-३-५० आभासः प्रतिबिंबः जीवस्य ब्रह्मप्रतिबिंबत्वमुच्यते बिंबप्रतिबिंबयोरभेदात् जीवब्रह्माभेदसिद्धिः।

## तृतीयः पादः

**सन्ध्ये सृष्टिराह हि**—इदं सूत्रं स्वाप्निकसृष्टेः मायामयत्वनिरूपणार्थं प्रवृत्तं पूर्वपक्षः स्वप्ने सृष्टिः पारमार्थिकीति। सिद्धान्तस्तु मायामयीति। मिथ्येत्यर्थः। तेन जीवस्य शुद्धत्वसिद्धिः स्वप्ने। यत्तु वैष्णवैः मायामात्रं विचित्रमित्यर्थः। तेनेश्वरकर्तृकत्वमित्याहुः। तत्तु माया ह्येषा मया सृष्टा सर्वभूतगुणैर्युक्तं मैवं मां मन्तुमर्हसि इत्यादिभारतवचनविरोधान्न समीचीनम्। कार्त्स्न्येनानभिव्यक्तत्वं ईश्वरसृष्टत्वे न हेतुः मिथ्यात्वे नु हेतुर्भवत्येव। अपि च मायामात्रत्वेन सिद्धान्तसूत्रस्य पूर्वपक्षसूत्रं अमायामयत्वविषयमेव कथनीयं; जीवसृष्टिवचनं बृहदारण्यकषष्ठगतं नेश्वरसृष्टत्वविरोधि स्वप्नस्य जीवसृष्टत्वेऽपि प्रयोजककर्तृत्वेनेश्वराभ्युपगमात्। ईश्वरस्य सर्वजगत्स्रष्टृत्वभंगाभावात्। अन्यथा कुलालादिसृष्टघटादौ ईश्वरसृष्टत्वबोधनाय सूत्रान्तरारंभस्यावश्यकत्वप्रसंगात्। तस्मात् इदं व्याख्यानं न हृदयंगमम्। मायामयत्वकथनस्य प्रयोजनमस्माकं जीवः असंगीतिनिर्णयो भवति। तेषां तु न किञ्चिद्विशिष्टं प्रयोजनम्। अपि च ईश्वरस्य

सर्वस्रष्टृत्वसंपत्त्यै कृतमिदमधिकरणं चेत् तदा प्रकृतिश्चेत्यधिकरणसमीपे भाव्यम् नात्र। असंगो ह्ययं पुरुष इति श्रुतिसमर्थनेऽनुपयोगात्।

**न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि** ( ३।२।११ ) इदमधिकरणं ब्रह्मणः उभयलिङ्गत्वं निराकरोति उभयलिङ्गं च सगुणलिङ्गं निर्विशेषलिङ्गं च। उभयोरपि श्रुतिषु पाठात् अशब्दमस्पर्शमिति यत्तदद्रेश्यमग्राह्यं अस्थूलमनगु इत्यादि निर्विशेषलिङ्गं सविशेषलिङ्गं तु मनोमयः प्राणशरीरः आत्मनानुपासीत मनोमयं प्राणशरीरं सत्यकामस्सत्यसंकल्प इत्यादि च। तत्र उभयोः न पारमार्थिकत्वं विरोधात् अन्यतरपारमार्थिकत्वे निर्विशेषत्वं पारमार्थिकं सविशेषत्वं तु उपासनार्थं कल्पितगुणैरप्युपासनसंभवात्। तावतापि तस्याङ्गीकारो दर्शितः देवताविग्रहादौ। तत्र प्रमाणान्तरविरोधाभावात्। सविशेषत्वं तु अस्थूलादिवाक्यविरुद्धम् तस्मात् न पारमार्थिकमिति भगवत्पादाः। सूत्राण्यप्यत्र स्पष्टानि। "न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि। ब्रह्मणः सर्वत्र ब्रह्मोपदेशप्रकरणेषु निर्विशेषस्यैव प्रतिपादनात्। येतु न स्थानतोऽपि यः पृथिव्यां तिष्ठन् इत्याद्युक्तस्थानस्थितस्य स्थानप्रयुक्ता दोषा न भवन्तीति व्याचक्रुः तेषां 'अपुरुषार्थसंबन्ध इत्यध्यारोपे दोषः अप्रकृतत्वात्। अपि च गगनस्याप्यन्तर्यामित्वेन कारणत्वेन च सूक्ष्मत्वात् दोषसंपर्कस्याप्राप्तिरेव अन्यथा अशुचिदेशवृत्तित्वेन मलमूत्रादिवृत्तित्वेन दोषापत्तेः। "एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः"। भगवद्गीतासु च यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते। सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते। इति ब्रह्मणि लेपाभावप्रतिपादनात् पूर्वपक्षो नोदियात्।

**अरूपवदेव हि तत्प्रधानत्वात्। इति सिद्धान्तसूत्रम्।**

अत्र न रूपवत् अरूपवत् निर्विशेषं ब्रह्मेत्यर्थः। ब्रह्मपदं तत्तु समन्वयादित्यतः सर्वत्रानुषज्यते। कुतः ? तत्प्रधानत्वात् अरूपवतः प्राधान्येन प्रतिपाद्यत्वात् सगुणवाक्यं तु उपासनाविधिप्रधानन गुणप्रधानं उपासनं च कल्पितैरपि गुणैः भवत्येव। एवमपि शास्त्रान्तरविरोधाभावे गुणाः स्वीकार्याः देवताधिकरणन्यायात्। अत्र तु निर्विशेषवाक्यविरोधात् नाभ्युपगन्तुं शक्यते इति भाष्यार्थः। अन्यैस्तु अरूपसदृशमेव तत् प्रधानत्वात् इति व्याख्यातम्। तत्सादृश्यं केन धर्मेणेत्यवचनात् सूत्राणामसन्दिग्धार्थकत्वनियमविरुद्धमिदम्। अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम्। अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः इति सूत्रलक्षणानाकान्तत्वात्। तत् इत्यप्यनावश्यकं ब्रह्मजिज्ञासाप्रभृति सर्वत्र ब्रह्मपदानुषंगात्। प्रधानत्वात् इति हेतुः सन्दिग्धः ब्रह्मणः ब्रह्मजिज्ञासेत्यादौ गुणत्वात्। प्रधानस्यैव लोके कुटुम्बनिर्वाहकस्य गुणदोषसंबन्धात् राज्यं शत्रुगृहीतं नष्टं चेत् तत् प्रधानस्य राज्ञ एव दोषः—इत्यादि।

अपि च निर्दोषत्वं निरवद्यं निरञ्जनं इति श्रुतिसिद्धत्वात् न प्रधानत्वहेतुना स्थापनीयं वेदस्य स्वतः प्रामाण्यात्। किञ्च अरूपवदेव हि तत्प्रधानत्वादिति अरूपवद्-

ब्रह्मेति सिद्धान्तकरणात् अरूपवत्त्वविषयमेवेदमधिकरणम् । न स्थानत इत्यस्य ब्रह्मणः उभयलिङ्गत्वं स्वतो न संभवति स्थानतः उपाधितोऽपि न संभवति इति निर्णीते तर्हि किंलिङ्गं ब्रह्म सविशेषलिङ्गं निर्विशेषलिङ्गं वा इति संशये अरूपवदेव निर्विशेषमेव ब्रह्म तत्प्रधानत्वात् तत्प्रतिपादकवाक्यानां विषयप्राधान्यात् सविशेषवाक्यानां विधिप्राधान्यादित्यर्थः । अन्यैस्तु बहुधेदं व्याख्यातम् । न च वत्प्रत्ययवैयर्थ्यं तत्पुरुषव्यावृत्त्यर्थत्वात् ।

अत्र च आह च तन्मात्र इति सूत्रं अद्वैतवादस्यैवोपोद्‌बलकं यतः पूर्वत्र प्रकाशादिवच्चावैशेष्यमित्युक्तत्वात् ततः प्रकाशानुवृत्तेः प्रकाशमात्र ब्रह्मचैतन्यं विज्ञानघन एव इति श्रुतेः । अत एव चतुर्थचतुर्थे चितितन्मात्रेण तदात्मकत्वादिति सूत्रमपि संगतम् ।

**प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्**

अत्र च प्रकाशाकाशादयः यथा उपाधिभेदेऽप्यभिन्नाः तथा ब्रह्मापि उपाधिभेदेनैव भिद्यते स्वतस्तु एकात्मत्वम् इति स्वमतं, ततः भेदाभेदमतमनुपस्थाप्य "पूर्ववद्वा" इति वेदाभिमतमद्वैतं सिद्धान्तयति ।

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ( ३-२-२२ )**

अत्र अथात आदेशो नेतिनेति—इत्यत्र प्रकृतं यत् इयत्तापरिच्छिन्नं तदेव निषिध्यते न तु ब्रह्म तस्य अन्यत्परमस्ति इति परेण सत्त्वबोधनात् । तृतीयाध्यायतृतीयपादे अक्षरधियां त्ववरोधः इति सूत्रे यत्तदद्रेश्यमग्राह्य—मित्यादिनां निषेधरूपाणां धर्माणामुपसंहार उक्तः तेन निर्गुणं ब्रह्मेति सिद्धम् । आनन्दादयः प्रधानस्येत्यत्र भावरूपधर्माणामुपसंहारः तत्र प्रियशिरस्त्वाद्यप्राप्तिः इति वदन् आनन्दमयस्याब्रह्मत्वमेव सूचयति । अनेन भाष्यगतस्य पुच्छब्रह्मवादस्य सूत्रकारेणाङ्गीकार उक्तः ।

चतुर्थाध्याये प्रथमपादे आत्मेति तूपगच्छन्ति ग्राहयन्ति च इति सूत्रम् (४-१-३) त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि इति ब्रह्मणि जीवः अभेदमतिं कुर्यादित्युक्त्वा ग्राहयन्ति चेति शेषेण तत्त्वमस्यादिवाक्येनाभेदं ग्राहयन्ति तस्मात् जीवः ब्रह्माभिन्नः—इत्युक्तं तेनाद्वैतसिद्धान्त एव प्रतिपाद्यते ।

**कार्यं बादरिरस्य गत्युपपत्तेः** (४. ३.७.) अस्मिन् सूत्रे 'स एनान् ब्रह्म गमयति इति श्रुतं ब्रह्मगमनमुपासकानामर्चिरादिमार्गेण गन्तॄणाम् । तत्र बादरिमतं कार्यं ब्रह्म चतुर्मुखब्रह्म ब्रह्मलोकस्थं गमयतीति । अस्य गत्युपपत्तेरिति हेतुरुक्तः गमनेन प्राप्त्युपपत्तेरिति तदर्थः । मुख्यस्य परब्रह्मणः गतिप्राप्यत्वानुपपत्तिः तस्य सर्वगतत्वेन अत्र ब्रह्म समश्नुते इति श्रुत्याचात्रैव प्राप्तिसंभवात् इत्युक्त्वा परं जैमिनिर्मुख्यत्वादिति

पूर्वपक्षः पश्चाद्गितः सूत्रकारेण । सूत्रकारः प्रायेण जैमिनिपक्षं पूर्वपक्षयित्वा स्वमतेन सिद्धान्तयति यथा मध्वादिष्वसंभवादनधिकारं जैमिनिः—पूर्वपक्षे। भावं तु बादरायणोऽस्ति हीति—स्वमतेन सिद्धान्तः । धर्मं जैमिनिरत एव (पू) पूर्वं तु बादरायणो हेतुव्यपदेशात् सि० ।

शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः इति पूर्वपक्षः अधिकोपदेशात्तु बादरायणस्य सि० एवं सत्यपि परामर्शं जैमिनिरचोदनाचापवदति हीति अनुष्ठेयं बादरायणः साम्यश्रुतेरित्येवं क्रमदर्शनेऽपि प्रकृते सयुक्तिकं बादरायणमतं प्रदर्श्य पश्चात् जैमिनिमतं प्रदर्श्यते परं जैमिनिर्मुख्यत्वात् इति । नैतावता जैमिनिमतं सिद्धान्तोभवितुमर्हति मुख्यत्वापेक्षया अनन्यभासिद्धलिङ्गस्यैव प्रावल्यमिति सूत्राकारैरेव सूचनात् आकाशस्तल्लिङ्गात् अत एव प्राण इत्याद्यधिकरणस्यान्यथा भङ्गप्रसंगात् । तत्र हि सर्वभूतोत्पत्तिस्थितिलयकारणत्वं लिङ्गं आकाशे नान्वेति अपि तु ब्रह्मणीति विशेषः। तस्मादद्वैताभिमतमोक्षे गन्तव्यत्वानुपपत्तिः अत्र ब्रह्म समश्नुते इत्यस्य च मुख्यत्वं सूत्रकाराभिमनं प्रदर्शिनम् ।

चतुर्थपादारंभे सम्पद्याविर्भावः स्वेन शब्दात् इति । ब्रह्मज्ञानात्; 'अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते इति श्रुतिसिद्धो मोक्षः शरीरत्रयाद्विविच्य ब्रह्म ज्ञात्वा मुमुक्षुः स्वेन सत्यज्ञानानन्दरूपेणाभिनिष्पद्यते इत्युक्त्वा मुक्तः प्रतिज्ञानात्, इति तदुत्तरसुत्रेण आविर्भूतस्वरूपो मुक्तः एव। प्रतिज्ञानात्; य आत्माऽपहतपाप्मेत्युपक्रम्य स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् —इति सर्वकामावाप्तिरूपस्य सोऽश्नुते सर्वान् कामान् सह इति श्रुतिप्रसिद्धस्य मोक्षस्य प्रतिज्ञानात्। अन्ये तु जगद्व्यापारवर्जं ब्रह्मलोके भोगं मोक्षमाहुः तत् एतद्विरुद्धम् तेषां पुनरावृत्तिराहित्यमात्रंफलम् । तदपि श्रुतात् इहशब्दात् अस्मिन् मन्वन्तरेऽनावृत्तिरित्याहुः ।

श्रीशङ्करभगवत्पूज्यपादेभ्यो नमः

द्वैतविशिष्टाद्वैतवादिनः सर्वेऽपि उपनिषत्सु ब्रह्मसूत्रेषु च सर्वत्र सविशेषं ब्रह्मैव निरूप्यते अतः निर्विशेषे प्रमाणाभाव इति—वदन्ति तत्रेदमुच्यते - उपनिषत्सु तावत् ईशावास्ये स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् कविर्मनीषी परिभूस्स्वयंभूः इत्यादि । केनोपनिषदि अन्यदेव तद्विदितादतोऽविदितादधि इति । सगुणमत्राभिप्रेतं चेत् तस्य ज्ञानविषयत्वात् विदितादन्यत्वं न स्यात् अतोऽत्र श्रोत्रस्य श्रोत्रमित्यादिना प्रोक्तं ब्रह्म निर्गुणमेव ।

कठवल्लीषु च अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् । अन्यत्र भूताच्च भव्यच यत्तत्पश्यसि तद्वद—इति प्रश्नसमाधानतया—

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः

परं ध्रुवं निचाय्य तन्मृत्युमुखात् प्रमुच्यते। यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतम—इति दृष्टान्तसाम्यात् शुद्धमेव ब्रह्म दार्ष्टान्तिकं ज्ञेयम्। प्रश्नोपनिषदि परमेवाक्षरं प्रतिपद्यते स यो ह वै तदच्छायमशरीरमलोहितं शुद्धमक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेवाविवेश इति—मुण्डके च यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः (मु १-१)

माण्डूक्ये---अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमेकात्मप्रत्ययसारं शान्तंशिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः। ऐतरेयके च प्रज्ञानं ब्रह्मेति।

तैत्तिरीये च सत्यं ज्ञानमनन्तं ब्रह्म आनन्दो ब्रह्म यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने इति----यतो वाचो निवर्तन्ते इत्यादि। छान्दोग्ये च षष्ठे सदेव सोम्येदमग्रासीदित्युपक्रम्य ब्रह्म तत्सत्यं स आत्मा तत्त्वमसि इत्यभेदो बोध्यते।

तत्रैव सप्तमे—यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्—इति।

अष्टमे च अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः इति शुद्धजीवस्य ब्रह्मभावनिर्णयः। बृहदारण्यके च द्वितीये "अथात आदेशो नेतिनेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति' —इति 'इदं महद्भूतमनन्तमपारं विज्ञानघन एव" "तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः "असंगो ह्ययं पुरुषः"

मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन। एकधैवानु द्रष्टव्यं इत्यादि च।

यत्र हि द्वैतमिव भवति तत्रान्योन्यत्पश्येत् यत्रत्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते। एवं सर्वासूपनिषत्सु वाक्यानि तात्पर्यलिङ्गैः षड्भिः सहितानि परमेव ब्रह्म गमयन्ति नित्यशुद्धमुक्तस्वभावमिति संक्षेपः।

भगवद्गीतास्वपि ज्ञेयं यत्तत्प्रवक्ष्यामि इत्युपक्रम्य अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते इति निर्विशेषमेवाह क्षेत्रज्ञं चापि मां विद्धीति जीवब्रह्माभेदमाह मत्स्थानि सर्वभूतानि इत्युक्त्वा न च मत्स्थानि इति निषेधात् प्रपञ्चमिथ्यात्वमाह। न त्वेवाहं जातु नासमिति श्लोके अहं त्वं इमे इत्यनुवादात् जीवभेद इति वदतः शास्त्रविरोधः ग्रहैकत्वाधिकरणे उद्देश्यगतसंख्याया अविवक्षितत्वकथनात् 'न करोति न लिप्यते' इति च जीवस्याकर्तृब्रह्मरूपतामाह। अतो गीता अद्वैतपरैव।

## अखण्डार्थवाद:

तत्त्वमसि अहं ब्रह्मास्मि इत्यादिमहावाक्यात् निष्प्रकारकं अखण्डब्रह्मविषयकं ज्ञानमुत्पद्यते। तथाहि—लोके घटमानयेत्यादिवाक्यात् आदौ घटीयं कर्मत्वं आनयनानुकूला कृतिःइष्टसाधनं इति खण्डवाक्यार्थद्वयं बुद्धयते। ततः घटकर्मकानयनानुकूलकृतिमांश्चैत्रः इति महावाक्यार्थज्ञानं जन्यते। इयं रीतिः तत्त्वमसीतिवाक्यार्थज्ञाने न योजयितुं शक्यते। तथाहि—तत्पदस्य जगत्कर्तृत्वादिविशिष्टे ब्रह्मणि शक्तिः त्वंपदस्य किञ्चिज्ज्ञत्वादिविशिष्टे जीवचैतन्ये शक्तिः उपनिषद्भ्यः अवगम्यते। समानाधिकरणपदद्वयेन तु अभेदो बोधनीयः यथा 'सोऽयं देवदत्तं इत्यत्र। स चाभेदःबाधितः। यद्यपि ब्रह्मैव शरीरं सृष्ट्वा शरीरे प्रविष्टं सत् जीव इत्यभिलप्यते। "तत्सृष्ट्वा तदेवानुप्राविशत्" "अनेन जीवेनात्मनाऽनुप्रविश्य" सर्वाणि रूपाणि विचित्यधीरः नामानि कृत्वाऽभिवदन् यदास्ते" इत्यत्र इतरश्रुत्यनुरोधात् "तत्रानुप्रविश्येति अध्याहर्तव्यम्। ततश्च जीवेशयोरभेदात् तत्त्वमसीत्यस्य तेन त्वमसि तस्मात्त्वमसीत्याद्यर्थकत्वं वा त्वच्छरीरकं तदस्तीत्यर्थे व्याख्यानं न हृदयंगमम्। अभेदश्रुतिबाधात् "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः। तं स्वाच्छरीरात्प्रवृहेत् मुञ्जादिवेषीकां धैर्येण। तं विद्याच्छुक्रममृतं" इति अंगुष्ठमात्रः ईशानः इत्यादौ जीवस्य शोधनपूर्वकं ब्रह्माभेदेन ज्ञानस्योक्तत्वात्। तथा च प्रथमतः जीवो ब्रह्माभिन्नः इति ज्ञानं जायते। ततः अभेदानुपपत्तिप्रतिसन्धानं ततः विशिष्टवाचकतदादिपदस्य विशेष्यमात्रे जहदजहल्लक्षणा ततः शुद्धस्योपस्थितिः पदद्वयेनापि। शुद्धयोश्च नाभेदः संसर्गः संसर्गमात्रस्य भेदनिष्ठत्वात्।

अतः महावाक्यार्थः अखण्डं ब्रह्मैव। तज्ज्ञानं च संसर्गागोचरं निष्प्रकारकं इत्यभिलप्यते। वाच्ययोरभेदज्ञानात् लक्षणाज्ञानद्वारा जन्यात् संसर्गाविषयकज्ञानात् अभेदविषयकाज्ञानस्य नाश इति स्थितिः।

तत्र संक्षेपशारीरकाचार्याः—लक्षणायां सिद्धत्वमात्रं प्रयोजकं न प्रमाणाधिगतत्वं इक्षक्षीरादिरसविशेषप्रतिपत्तये माधुर्यविशेषः इति प्रयुज्यमानपदस्य स्वानुभवसिद्धरसविशेषेलक्षणात्। तस्य च स्वसाक्षिवेद्यस्य प्रत्यक्षादिप्रमाणावेद्यत्वात्। तत्र सत्यत्वं मिथ्यात्वविरोधिस्वरूपं एवं ज्ञानत्वानन्दत्वे जड़त्वदुःखस्वरूपत्वविरोधिस्वरूपमेव। इदं च तत्पदार्थनिर्णये। त्वपदार्थश्च किञ्चिज्ज्ञत्वदुःखादिविरोधिस्वरूपमेव लक्षणया बोध्यते उभयत्र जहदजहल्लक्षणा आश्रणीया, अन्तःकरणप्रतिबिंबो जीवः मायाप्रतिबिंबो वा इति पक्षयोः बिंबप्रतिबिंबयोः अभेदात् जहदजहल्लक्षणा। प्रतिबिंबः आभास एव न परमार्थ इति पक्षे जीवस्वरूपे त्वंपदस्य जहल्लक्षणैव, इत्थं वाक्यादखण्डानुभवं वर्णयति संक्षेपशारीरकं—

सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः,<br>
पश्चादेव विशेषणेतरतया पश्चाद्विरोधोद्भवः।<br>
उत्पन्ने च विरोध एकरसके वस्तुन्यखण्डात्मके<br>
वृत्तिर्लक्षणया भवत्ययमिज्ञेयः क्रमः सूरिभिः॥ इति।

लोकेऽपि अखण्डार्थकं वाक्यमस्तीत्यत्र तदुक्तो दृष्टान्तः-भिन्नोघटः अभिन्नोघटः इति। अत्र भिन्न इत्यस्य भेदवान् इत्यर्थकरणे भेदस्यघटेन साकं भेदो वक्तव्यः संबन्धस्य भेदनिष्ठत्वात् भेदभेदस्याप्येवमित्यनन्तभेदप्रवाहापत्तिः अतो भेदो घटस्वरूपमेवेति सिद्धमखण्डार्थत्वम्। एवं भिन्न इत्यत्र—शास्त्रेऽपि व्याकरणे 'प्रातिपदिकार्थे प्रथमा' इत्युक्तेः प्रथमार्थो घटादिरेव प्रातिपदिकार्थः घटः इति प्रयोगात्। अतः प्रातिपदिकार्थ-प्रथमार्थयोरभेदः तस्यासंसर्गत्वात् अखण्डार्थ एव।

शाब्दबोधे च भाट्टाः अभिहितान्वयबोधं स्वीकुर्वन्ति, तस्य अभिहितपदार्थ-करणकबोध इत्यर्थः। तन्मते पदजन्यस्मृत्यनुभवविलक्षणज्ञानविषयीभूताः पदार्था अभिहिता उच्यन्ते। ताश्चाकांक्षानुसारेण स्वान्वयमनुभावयन्ति इति वाक्यार्थो लक्ष्य उच्यते। पदार्थेन पदार्थलक्षणार्थं पूर्वसंबन्धज्ञानापेक्षा। वाक्यार्थलक्षणायां तु न तदपेक्षा। एवं च पदशक्तेः पदार्थोपस्थितावेवोपक्षयात् उपस्थितानां च पदार्थानुभव-जनकत्वात् सर्वपदलाक्षणिकत्वे च न महावाक्यादखण्डानुभवानुपपत्तिः।

विवरणाचार्याः अन्विताभिधानपक्षमेवाश्रयन्ते। तन्मते पदानामन्वयानुभव-जननसामर्थ्यमेव शक्तिः एकैकपदार्थोपस्थितिः एकसंबन्धिज्ञानमिति रीत्या साध्या। एवं च पदार्थोपस्थितेः पदशक्त्यसाध्यत्वात् अर्थाध्याहार आश्रितः घटेन जलमाहरेत्यादौ च्छिद्रेतरत्वादेः योग्यतया उपस्थितस्य शाब्दबोधे भानम् अस्मिन् मते पदयुगलात् स्मृतियुगलमेव जन्यते तेन च वाक्यार्थस्याखण्डस्य बोधः इति विशेषः।

अखण्डार्थद्वैविध्यम् अत्राद्वैतसिद्धिकाराः सोऽयमखण्डार्थो द्विविधः आद्यः पदार्थ-निष्ठःद्वितीयः वाक्यार्थनिष्ठः। उभयमपि लौकिकवैदिकभेदेन द्विविधम्। वैदिकं पदार्थ-निष्ठं तत्पदार्थनिष्ठं त्वंपदार्थनिष्ठमिति द्विविधम्। तत्र च तत्पदार्थनिष्ठं सत्यं ज्ञानमनन्तं ब्रह्म विज्ञानमानन्दं ब्रह्मेत्यादि। त्वंपदार्थनिष्ठं तु योऽयं विज्ञानमयः प्राणेषुहृद्यन्तर्ज्योतिः पुरुषः—इत्यादिः।

पदार्थनिष्ठं अखण्डार्थत्वं महावाक्यघटकपदार्थयोः भेदबुद्ध्यविरोधित्वे सति अखण्डार्थनिष्ठत्वं उक्तभेदबुद्धिविरोधित्वे सति अखण्डार्थनिष्ठत्वं महावाक्यार्थनिष्ठम-खण्डार्थत्वमिति भेदः।

लौकिकं तु लम्बकर्णो देवदत्त इति पदार्थनिष्ठं सोऽयं देवदत्त इति वाक्यार्थनिष्ठम् यद्वा अपर्याययोः प्रातिपदिकयोः एकस्मिन् प्रातिपदिकार्थे पर्यवसायित्वं अखण्डार्थत्व-मिति लक्षणम्।

तत्र सत्यंज्ञानमनन्तं ब्रह्मेति वाक्यं लक्षणवाक्यत्वात् अखण्डार्थम् तन्मात्रप्रश्नो-त्तरत्वाद्वा इति पदार्थनिष्ठाखण्डार्थत्वे न्यायप्रयोगः। वाक्यार्थनिष्ठे तु तत्त्वमस्यादि-वाक्यमखण्डार्थनिष्ठं आत्मस्वरूपमात्रनिष्ठं वा अकार्यकारणद्रव्यमात्रनिष्ठत्वे सति समानाधिकरणत्वात् तन्मात्रप्रश्नोत्तरत्वाद्वा सोऽयं देवदत्त इत्यादिवाक्यवदिति

प्रयोगः। आद्ये सत्यादिवाक्ये ब्रह्मविदाप्नोति परमिति पूर्ववाक्ये ब्रह्मवेदनस्यैव परप्रापकत्वोक्त्या कीदृशं तद्ब्रह्मेति जिज्ञासासंभवात् तदुत्तरस्य च तन्मात्रविषयत्वात्। एवं तत्त्वमस्यादिवाक्यस्यापि कोऽहमित्यात्मस्वरूपस्यैव प्रश्नविषयत्वेन तदधिकप्रतिवचनस्यानाकांक्षितत्वात्। न च लक्षणवाक्यं असाधारणधर्मवैशिष्टयप्रतिपादकं न तु अखण्डार्थमिति शङ्क्यम्। सर्वलक्षणवाक्यानामेवाखण्डार्थत्वात् स्वरूपलक्षणस्य स्वरूपमात्रपरत्वात् तटस्थलक्षणे तु जगत्कारणत्वादौ सखण्डत्वमेव।

सोऽयं देवदत्त इति वाक्यवत् तत्त्वमसिवाक्यमपि अखण्डार्थम्। तथाहि—सोऽयमित्यत्र तद्देशकालविशिष्टे एतत्कालदेशवैशिष्ट्यं न तावत्प्रतिपाद्यं। नापि एतत्कालेविशिष्टे तत्कालवैशिष्टयंबाधात् तत्कालस्येदानीं सत्त्वापाताच्च। विपरीतेतु एतत्कालादेः अन्यकाले सत्त्वापत्तिः तत्तद्विशेषणविशिष्टयोर्भेदात् नैक्यसंभवः। तथाचोभयविशेषणपरित्यागेन विशेष्यमात्रमभिन्नं प्रतीयते—एवमेव च तत्त्वमसीत्यादौ तत्तेदन्त्वोपस्थितिद्वारकाभेदबाधस्यैव तात्पर्यविषयत्वात् तेन च अयं स वा न वा, अयं न सः इति संशयविपर्यययोर्निवृत्तेः। यद्यपि प्रत्यभिज्ञायां न लक्षणा शब्दाभावात् तथापि प्रत्यक्षस्य विशिष्टाभेदविषयत्वे बाधात् स्वरूपाभेदविषयत्वमावश्यकम्। अभेदश्च न प्रकारः स्वरूपतया प्राधान्यात्। अत एव न संसर्गः अभेदे तदनुपपत्तेः। यद्यपि तत्त्वमसीति वाक्येन स्वरूपमात्रं ज्ञाप्यते तथापि किञ्चिज्ज्ञत्वोपलक्षिते सर्वज्ञत्वोपलक्षिताभेदज्ञानद्वारकत्वात् तस्य जीवब्रह्मभेदाज्ञाननिवर्तकत्वमुपपन्नम्।

तदुक्तं—उपाधिभेदभिन्नार्थो येनैकः प्रतिपाद्यते।
तदपि स्यादखण्डार्थं महत्खं कुम्भखं यथा॥ इति।

तथा च तत्त्वमसिवाक्यमखण्डार्थं उपाधिभेदभिन्नेऽर्थे ऐक्यप्रतिपादकत्वात् घटखं महाखं इति वाक्यवत्। ननु आकाङ्क्षायोग्यताऽऽसत्तयः शाब्दबोधे कारणानि तानि च संसृष्टार्थे घटितानि अखण्डार्थे संसर्गाविषयकत्वात् कथं तेषां संभव इति चेन्न। तथाहि आकांक्षाहि अभिधानापर्यवसानं तच्च तात्पर्यविषयान्वयाननुभावकत्वं, तत्रान्वयांशो व्यर्थः येन विना यस्य तात्पर्यविषयाननुभावकत्वं तदेव तस्याकांक्षेति नानुपपत्तिः। योग्यता च तात्पर्यविषयाबाधः न तु तात्पर्यविषयसंसर्गाबाधः तत्र संसर्गांशस्याव्यावर्तकत्वात्।

सन्निधिश्च नान्वयप्रतियोग्युपस्थितिः अन्वयांशस्य निष्प्रयोजनत्वात् अपि तु अविलंबेन शाब्दबोधानुकूलपदार्थोपस्थितिरेव। अतस्तस्या अप्यखण्डार्थपरे वाक्ये भवत्युपपत्तिरिति सिद्धिकाराः। श्रीनृसिंहस्वामिनोऽप्येवमेव मन्यन्ते। सं. सं. विश्वविद्यालय द्वारा एतग्रन्थसंपादने उपकृतवतां श्रीबदरीनाथमहोदयाना ग्रन्थसंपूर्तये महदुपकृतवतां च श्रीगौरीनाथशास्त्रिमहाभागानां चोपकारं स्मृत्वा तेभ्यः प्रणामान् समर्पयामि।

—एस सुब्रह्मण्यशास्त्री

# विषयसूची

# अद्वैतदीपिकायां

## चतुर्थः परिच्छेदः

यस्मिन्नस्तसमस्तमोहमहिमस्वानन्दमन्दीकृत-
ब्रह्मानन्दमहार्णवे महति न प्राचीनवाचामपि ।
शक्तिस्सत्यचिदात्मके नरहरौ मोहामरारेररौ
तन्मे तापनिवृत्तये श्रुतिगतं भूयादखण्डं महः ।।

जगन्नाथाश्रमगुरोः कृपाराकासुधाकरः ।
स्पष्टीकरोतु मेऽस्पष्टं मार्गं ब्रह्मसुखावहम् ।।

तत्त्वमस्यादिवाक्यार्थनिरूपणम्

अथ वाक्यार्थो ब्रह्मनिरूप्यते । तत्र वादिनां विप्रतिपत्तेः । तदर्थं च वाक्यार्थे ब्रह्मणि पदानां शक्तिरस्ति न वेति चिन्त्यते ।

---

### टीका

श्रीगुरुभ्यो नमः ।

स्रष्टृश्रीशमहेशतज्जपवनेन्द्विन्द्रवन्ह्यादिभिः सृष्ट्याादावनिशं कृतैः स्वविहितैः उद्विग्नचित्तैर्भृशम् । सत्यज्ञानसुखामृताभयवपुः तत्त्वं परं प्रार्थितं नूनं नो गुरुरूपमेत्य जगतां मुक्त्यै परं चेष्टते ।

परिच्छेदान्तरमारभमाणः परदेवताप्रार्थनव्याजेन वक्ष्यमाणार्थं संक्षिप्य दर्शयति—यस्मिन्निति । अस्तो निरस्तः समस्तो मोहमहिमा मायाविलासात्मकोऽनर्थः यस्मिन् तेन स्वात्मानन्देन मन्दीकृतः हेयत्वं गमितः ब्रह्मणो हिरण्यगर्भस्य आनन्दमहा-

ब्रह्मणः अवाच्यत्वे पूर्वपक्षः

अत्र नवीनः न ब्रह्म सर्वशब्दावाच्यं अवाच्यपदेनैवाभिधानात्। न च तेनापि लक्ष्यते अवाच्यरूपमुख्यार्थस्याभावात् भावे वा ब्रह्मावाच्यमेव अवाच्यपदवाच्यरूपमुख्यार्थसम्बन्धिमात्रमिति स्यात्। मुख्यार्थहीनस्य ब्रह्मलक्षकत्वे घटशब्दोऽपि घटलक्षकः स्यात्। एवं निर्विशेषं स्वप्रकाशं परमार्थसदित्यादिशब्दैः ब्रह्मोच्यते चेत् वाच्यत्वसिद्धिः। न च तैर्लक्ष्यते निर्विशेषस्वप्रकाशादिरूपस्य मुख्यस्यान्यस्याभावात्। एवं लक्ष्यशब्देनोच्यते चेत् लक्ष्यत्वहानिः गङ्गाशब्दलक्ष्यस्यागङ्गात्ववत् लक्ष्यपदलक्ष्यस्यालक्ष्यत्वात्।

निर्विशेषादिपदानां विशिष्टवाचित्वेन आक्षेपः

ननु निर्विशेषादिशब्दानां विशेषाभावादिविशिष्टं वाच्यम्। तच्च न ब्रह्म,

---

र्णवो येन तत् तथोक्तं, हिरण्यगर्भानन्दस्य मानुषानन्दाद्यपेक्षया भूयस्त्वात् अर्णवत्वोक्तिः। तथापि तस्य भार्यया रत्यादिश्रवणात् तदानन्दस्यानर्थसंभिन्नत्वात् परिच्छिन्नत्वाच्च नरहरिपदोपलक्षितपरब्रह्मानन्दापेक्षया निकृष्टत्वाद्धेतोरित्यर्थः। प्राचीनवाचां वेदानामपि शक्तिर्नेति संबन्धः।

सच्चिदानन्दाखण्डब्रह्मणि नरहरिपदप्रयोगे निमित्तमाह—मोहेति। मोह एवामरारिः हिरण्यकशिपुः परोपद्रवकारित्वसामान्यात् तस्यारिःस्वाकारवृत्तिसाक्षात्काररूपनखैः संहर्ता तस्मिन्नित्यर्थः।—श्रुतिगतमिति। श्रुतिभिर्लक्षणया प्रतिपाद्यमित्यर्थः। कृपैव राकासुधाकरः पूर्णचन्द्रः। अस्पष्टमिति च्छेदः।

प्राधान्येन परिच्छेदप्रमेयमाह—अथेति। पदार्थप्रतिपत्तिपूर्वकत्वात् वाक्यार्थप्रतिपत्तेः तत्त्वंपदार्थनिरूपणानन्तरं वाक्यार्थो निरूप्यत इत्यर्थः। विप्रतिपत्तेरिति। जीवस्य ब्रह्मत्वेनोपासनं वाक्यार्थ इति केचित्। अंशांशिभाव इति परे। शरीरशरीरिभाव इत्यन्ये। एवं सत्यादिवाक्येऽपि सत्यत्वादिसंसर्ग एवार्थ इति सर्वे। भगवत्पादीयास्तु उभयत्राप्यखण्डब्रह्मैव वाक्यार्थ इत्यास्थिताः। ततश्च इतरमतनिरासेन अखण्डार्थत्वमुपपादनीयमित्यर्थः। सत्यादिपदानां शक्त्या ब्रह्मप्रतिपादने तस्याखण्डार्थत्वायोगात् लक्षणयैव तत्प्रतिपादनमिति वक्तुं तत्पदशक्तिस्तावन्निराक्रियत इत्याह—तदर्थ चेति। पूर्वपक्षमनुवदति—अत्रेति। मुख्यार्थस्याभावादिति। ततश्च शक्यसंबन्धरूपलक्षणाबीजाभावात् ब्रह्मणो नावाच्यपदलक्ष्यतेत्यभिमानः। ब्रह्मातिरिक्तावाच्यपदवाच्याभ्युपगमे तल्लक्ष्यमपि ब्रह्म वाच्यमेव स्यात् अवाच्यान्यस्य वाच्यत्वनियमादित्याह—भावे वेति। अवाच्यपदमुख्यार्थाभावे दोषान्तरमाह—मुख्येति। उक्तमन्यत्रातिदिशति—एवमिति। लक्ष्यपदेनापि ब्रह्म लक्ष्यत इत्याशङ्क्याह—गङ्गेति। विशिष्टस्वरूपयोर्भेदात्

तस्य विशेषाभावाद्युपलक्षितत्वादिति चेत्। तर्हि विशेषाभावोपलक्षितशब्द-वाच्यम्।

ननु विशेषाभावोपलक्षितत्वादिकं तद्विशिष्टं वा निर्विशेषादिपदवाच्यम्। तच्च न ब्रह्म, किन्तु तदाश्रयव्यक्तिभूतं विशेष्यं वा। एवं च मुख्यार्थसिद्धिः ब्रह्मणो निर्विशेषादिशब्दावाच्यत्वेऽपि निर्विशेषत्वाद्यहानिश्चेति चेत्।

न, व्यक्तिः शब्दार्थः जातिस्तु उपधानमितिमते जातिविशिष्टा व्यक्तिः शब्दार्थ इति मते च यत्र विशेष्ये निर्विशेषत्वादिकं तस्य तत्पदवाच्यत्वायोगात्। जातिःशब्दार्थ इति मते तु घटादिव्यक्तेरपि घटादिशब्दावाच्यत्वेन ब्रह्मणस्ततो विशेषार्थं जातिवाचिभिः शब्दैः ब्रह्म ज्ञात्याधारव्यक्तिसम्बन्धितयैव लक्ष्यत इति वक्तव्यत्वेन मुख्यार्थाभावादिदोषतादवस्थ्यात्। सत्यं ज्ञानमित्यादौ ब्रह्मणः सत्यत्वादिधर्माश्रयतयैव लक्षितत्वात् लक्ष्यघटादिवत् सखण्डत्वापाताच्च। निर्गुण-स्वप्रकाशादेरब्रह्मत्वे यद्यत् ब्रह्मतयेष्टं तत्तदब्रह्मेति साधु समर्थितो ब्रह्मवादः।

ननु अवाच्यादिशब्दाः समासरूपाः लक्ष्यादिशब्दास्तु यौगिकाः, उभयेषामपि वाक्यतुल्यत्वात् न वाचकतेति चेत्, न, अन्विताभिधानपक्षे तेषामपि वाचकत्वात्। अभिहितान्वयपक्षे वाक्य एवाभिहितान्वयस्वीकारेऽपि प्रकृतिप्रत्यययोरन्विताभि-धायित्वात्। समासे पदार्थसंसर्गस्य यौगिके प्रकृतिप्रत्ययार्थसंसर्गस्य चानभिधेय-

---

विशिष्टवाचकैः स्वरूपमुपलक्ष्यत इति शङ्कते—नन्विति। स्वरूपस्यैवोपलक्षितशब्द-वाच्यतेत्याह—तर्हीति। उपलक्षितपदस्यापि ब्रह्म न वाच्यमित्यभिप्रेत्य शङ्कते—ननु विशेषेति। निर्विशेषत्वाद्यहानिरिति। अवाच्यस्यैव ब्रह्मणो वाच्यनिर्विशेषत्वाद्याश्रयत्वा-दित्यर्थः।

किमेतत् व्यक्तिः शब्दार्थ इति मतेनोच्यते उत जातिविशिष्टव्यक्तिरिति मतेन, जातिरिति मतेन वा? न सर्वथापीत्याह—न व्यक्तिरित्यादिना। किञ्च ब्रह्मणोऽसत्त्वादि-व्यावृत्तये सत्तादिकमभ्युपेयं ततश्च नाखण्डार्थतेत्याह—सत्यं ज्ञानमिति। निर्गुणत्वादिवि-शिष्टस्याब्रह्मत्वाभिधानमप्ययुक्तमित्याह—निर्गुणेति। अवाच्यादिपदानां समुदाय-शक्त्यभावात् न वाचकता, ततः कथं ब्रह्मणः तद्वाच्यत्वाभिधानमिति शङ्कते—नन्विति। इतरान्वितस्वार्थे पदानां शक्तिरिति मते वाक्यस्याप्यनेकपदशक्त्यैवार्थबोधकत्वात् वाचकत्वमस्त्येवेत्याह—न, अन्वितेति। न चेतरान्वयमात्रे पदशक्तावपि विशेषान्वये वाक्यप्रमेये न कस्यापि पदस्य शक्तिरिति वाच्यम्। अन्वयप्रतियोगिविशेषस्य पदान्तर-शक्तिगोचरत्वात् तत एव विशेषान्वयलाभादित्यभिमानः। मतान्तरेऽपि लक्ष्यादिपदानां वाचकत्वं घटत इत्याह—अभिहितेति। समासपदे यौगिकपदे च पदार्थसंसर्गस्यानभिधे-यत्वेऽपि पदार्थानामवयवशक्तिगोचरतयाऽभिधेयत्वात् ब्रह्मणोऽपि तदवयववाच्यत्वं दुर्वारमित्याह—समासेति। अवाच्यत्वादिपदानामवयवार्थोऽपि न ब्रह्म येन वाच्यता

त्वेऽपि पदार्थस्य प्रकृतिप्रत्ययार्थस्य च वाच्यत्वेन तदर्थस्य ब्रह्मणो वाच्यत्वा-परिहाराच्च ।

यदि च ब्रह्म न पदार्थः, किन्तु पदार्थसंसर्गरूपं तर्हि सखण्डं स्यात् । यदि तु अवाच्यमित्यादि न पदार्थद्वयाधिकस्वार्थसंसर्गपरं किन्तु ब्रह्ममात्रलक्षकं तर्हि न तेनावाच्यत्वादिसिद्धिः । तस्मान्निर्विशेषादिशब्दवाच्यत्वं दुर्वारम् ।

'यतो वाचो' निवर्तन्ते "अशब्दमस्पर्शमरूपमि"त्यादि श्रुतिस्त्वद्भुतत्वाभि-प्राया । न हीदृगिति ज्ञेयम् । 'न वाच्यं न च दृश्यते' पश्यन्तोऽपि न पश्यन्तीत्यादि-श्रुतौ तद्दर्शनात् । पराभिमतेऽर्थे अशब्दमित्यादिशब्दवाच्यत्वस्यापि निषेधेन तद-सिद्धेः । यतो वाच इत्यत्रापि मनसा सहेति श्रुतौ मनोवृत्तेरिव अन्तः करण-वृत्तिव्याप्ये ब्रह्मणि वाग्वृत्तेरपि निषेधायोगाच्च आनन्दाद्यनेकशब्दमुख्यार्थत्वाय निवर्तन्त इत्येकस्यैवामुख्यार्थत्वस्य न्याय्यत्वाच्च । 'अथ कस्मादुच्यते ब्रह्म" "यस्मादुच्यते परं ब्रह्म वचसां वाच्यमुत्तमं" इत्यादिश्रुतेश्च ।

ब्रह्मणो वाच्यत्वेऽनुमानानि-पू-

(१) वेदान्ततात्पर्यविषयो ब्रह्म वाच्यम् वस्तुत्वात् लक्ष्यत्वात् तीरवत् (२) परमार्थसदादिपदं कस्यचिद्वाचकं पदत्वात् घटादिपदवत् (३) सत्यज्ञानादिवाक्यं वाच्यार्थतात्पर्यवत् वाक्यत्वात् अग्निहोत्रादिवाक्यवत् इत्यनुमानैर्विरोधाच्च । विपक्षे लक्ष्यत्वं न स्यात् । तथाहि लाक्षणिकशब्दो न श्रुत एवार्थान्तरधीहेतुः तत्रा-गृहीतशक्तिकत्वात् । किन्तु स्ववाच्यार्थेऽनुपपत्तिदर्शने सति तत्त्यागेन स्वार्थसम्ब-न्धित्वेनावगतस्यार्थान्तरस्यावबोधकः गङ्गादिशब्दादौ तथा दर्शनात् । अन्यथाऽति-

---

स्यात् किन्तु तत्संसर्गरूपमित्याशङ्क्याह — यदि चेति । अवाच्यादिपदस्य सर्वावयवैः ब्रह्ममात्रस्य लक्षणया प्रतिपाद्यमानत्वात् नोक्तदोष इत्याशङ्क्याह — यदि त्विति । न तेनेति । ब्रह्ममात्रस्य वाच्यत्वेनाविरोधादित्यर्थः । ब्रह्मणो वाच्यत्वं श्रुतिविरुद्धमित्या-शङ्क्य श्रुतिरप्यन्यार्थेत्याह — यत इति । यथाश्रुतेऽनुपपत्तिमाह — परेति । न च अशब्द-मित्यत्र समासगतसर्वनाम्ना ब्रह्म लक्षणयोपादाय तत्र शब्दवाच्यत्वनिषेधो वाक्यार्थ इति वाच्यम् । सर्वनाम्नः सर्वाभिधायकतया लक्षकत्वायोगादित्यभिमानः । किञ्च मनोवृत्तिगोचरे, ब्रह्मणि मनसा सह वाचः प्रवृत्तिनिषेधः न यथाश्रुतार्थः संभवतीत्याह — यतो वाच इति । ननु त्वदुक्तार्थेऽपि श्रुतहानिरश्रुतकल्पना च दोष इत्याशङ्क्य बहूनाम-नुग्रहात् स न दोषः इत्याह — आनन्देति । ब्रह्मणो वाच्यत्वस्य श्रुत्यनुमानसिद्धत्वादप्येव मेवेत्याह — अथ कस्मादित्यादिना । हेतूनामप्रयोजकत्वं निरस्यति — विपक्ष इति । मुख्या-र्थसंबन्धस्तदवगमो न लक्षणाहेतुः विषं भुङ्क्ष्वेत्यादौ तदभावादित्यत आह — अन्यथेति । मुख्यार्थसंबन्धादेरनियामकत्वे गङ्गादिपदात् पर्वतादिलक्षणाप्रसंगात् । विषवाक्येऽपि

प्रसङ्गात् । तथा च ब्रह्मणोऽपि लक्ष्यत्वे वाच्यार्थसंसर्गितया ज्ञेयत्वात् । औपनिषदस्य चाशब्देनाज्ञेयत्वात् । स्वप्रकाशतया नित्यसिद्धौ च शब्दवैयर्थ्यात् । अवाच्येलक्षकस्यैव तस्य वक्तव्यत्वात् । तत्रापि स्वार्थसम्बन्धित्वेन ज्ञेयत्वेनानवस्थेति कथमवाच्ये लक्षणा । न च वाचकस्यापि गृहीतसंगतिकस्यैव बोधकत्वात् संबन्धग्रहणस्य च सम्बन्धिज्ञानाधीनत्वात् तस्य च ब्रह्मणः शब्दैकमेयत्वात् तत्राप्यनवस्थेति वाच्यम् यौगिकशब्दानां वाक्यतुल्यत्वेनानपेक्षणात् ।

निमित्ताभा ात् न शब्दवाच्यता । ( पू- )

ननु प्रवृत्तिनिमित्ताभावात् कथं वाच्यत्वम् ? न च गुणक्रियाजात्यन्यतममात्मन्यस्ति । न च घटादाविवारोपितं निमित्तमस्तीति शङ्कनीयम् । आरोपिते श्रुतितात्पर्यायोगेन तात्पर्यविषयस्य वाच्यत्वायोगादिति चेत् ।

न, सत्यादिशब्दानां लक्षकत्वे सिद्धे निमित्ताभावः तस्मिन् सिद्धे च लक्षकत्वमित्यन्योन्याश्रयात् । स्वरूपमात्रप्रश्नोत्तरत्वेन लक्षकत्वमित्यस्याखण्डार्थत्वभङ्गे

---

कथञ्चित् मुख्यार्थसंबन्धस्य वक्तव्यत्वादिति भावः ।

ततः किमित्यत आह—तथाचेति । स्वरूपप्रकाशेन वाच्यार्थसंबन्धितयाऽवगते लक्षणेत्याशङ्क्याह—स्वप्रकाशेति । तर्हि शब्दादेवावगते ब्रह्मणि लक्षणेत्याशङ्क्य तस्य तद्वाचकत्वानभ्युपगमात् लक्षणया बोधकत्वं वाच्यम् । तच्च पूर्वं तदवगमं विना नेत्यनवस्थेत्याह—अवाच्य इति । वेदैकगम्यब्रह्मणो वाच्यत्वेप्यनवस्था तुल्येत्याशङ्क्य ब्रह्मादिपदानां यौगिकतया सङ्गतिग्रहं विनाप्यपूर्वब्रह्मबोधकत्वसंभवात् मैवमित्याह—न च वाचकस्येत्यादिना । ननु ब्रह्मणो ब्रह्मादिपदगतावयवशक्तिगोचरत्वे तत्र सङ्गतिग्रह आवश्यकः तदगोचरत्वे च न वाच्यतेति चेन्न, वाक्यार्थविधया तत्रावगतेऽस्य पदान्तरवाच्यत्वसंभवात् । न च तद्वाक्यार्थस्य तत्पदशक्त्यगोचरत्वाल्लक्षणयैव ततस्तत्प्रतीतिर्वाच्या । ततश्च लक्षणापक्षोक्तदोषापात इति वाच्यम् । वाक्यार्थे शब्दप्रवृत्तिं विनाप्याकाङ्क्षादिमहिम्नैवावगतिसंभवादिति भावः । वाक्यार्थब्रह्मणो निर्धर्मकत्वान् न वाच्यतेति शङ्कते—नन्विति । ननु त्वन्मते घटादीनां वास्तवधर्माभावेऽप्यारोपितधर्मवत्त्वाद्यथा वाच्यत्वं तद्वद्ब्रह्मणोऽपि किं न स्यादित्याशङ्क्य तथा सति वाच्यस्य श्रुतितात्पर्यगोचरता त्वदभिलषिता न सिद्ध्येदित्याह—न च घटादाविति ।

सत्यज्ञानादिपदैः सत्यत्वादिधर्मविशिष्टधर्मिप्रतीतेः तस्य निर्धर्मकत्वमसिद्धम् । न च सत्यादिपदानां ब्रह्मस्वरूपमात्रलक्षकत्वात् न धर्मे प्रामाण्यमिति वाच्यम् इतरेतराश्रय इत्याह—न सत्यादीति । ननु प्रवृत्तिनिमित्ताभावात् सत्यादिपदानां लक्षकत्वमिति न ब्रूमः किन्तु स्वरूपमात्रप्रश्नोत्तरत्वात् तल्लक्षकत्वं ततश्च मानाभावात् प्रवृत्तिनिमित्ताभावः इति तत्राह—स्वरूपेति । इतोऽपि न प्रवृत्तिनिमित्ताभाव इत्याह—निर्विशेषेति ।

नि ^स्तत्वात् । निर्विशेषवाक्यस्य स्वरूपमात्रपरत्वे विशेषाविरोधात् । तस्य निर्विशेषत्वविशिष्टचपरत्वे तु निमित्तस्य सत्त्वेन निर्विशेषशब्दवाच्यत्वापातात् । अभावनिमित्तकशब्दवाच्यत्वे प्रामाणिकत्वाविशेषेण भावनिमित्तकशब्दवाच्यत्वस्यापि दुरपह्नवत्वात् । तस्मात् ब्रह्मणि सर्वेषां वेदान्तानां लक्षणेत्येतदयुक्तमिति ।

सिद्धान्तः ब्रह्मलक्ष्मेव ।

अत्रोच्यते । तात्पर्येण सत्यादिवाक्यप्रतिपाद्यं ब्रह्म न तद्वाक्यस्थपदशक्यम् तद्वाक्यार्थत्वात् सम्मवत् । वाक्यार्थनिर्गुणब्रह्मण एवास्माभिरवाच्यत्वाङ्गीकारात् ।

स्वप्रकाशस्यापि ब्रह्मणो वृत्तिविषयत्वमविरुद्धं 'वेदैश्च सर्वैरहमेव वेद्य' इति 'औपनिषदमित्यादि श्रुत्या च वाक्यार्थत्वसिद्धिः । न चान्विताभिधानवादे नियोगादौ व्यभिचारः, अन्वयविशेषस्य तद्विशिष्टस्य ना वाक्यार्थस्य तत्पदागोचरत्वात् । न चाप्रयोजकत्वं सत्यज्ञानानन्दात्मनि ब्रह्मणि सत्यादिपदस्यैकैकस्यशक्तौ

---

अस्तु तर्हि ब्रह्म अभावप्रवृत्तिनिमित्तकशब्दस्यैव वाच्यमिइत्याशङ्क्याह---अभावेति । पूर्वपक्षमुपसंहरति---तस्मादिति ।

वाच्यत्वाभावे वक्ष्यमाणतर्कानुग्राह्यमानं तावदाह—अथेति । मतद्वयसम्मतपक्षमाह···तात्पर्येणेति । तात्पर्यभ्रमात् विशिष्टमपि वाक्यप्रतिपाद्यं तस्य वाच्यत्वाङ्गीकारात् तद्व्युऽदासाय तात्पर्येणेत्युक्तम् । सम्मतवदिति । यो यद्वाक्यार्थः स न तत्पदशक्यः यथा नदीतीरे फलानि सन्तीति वाक्यार्थः तीरफलसत्तासंसर्गः न तत्स्थपदशक्य इत्यर्थः । विशिष्टस्य वाच्यत्वमुभयसम्मतमिति न विवाद इत्याशङ्क्य तथापि वाक्यार्थब्रह्मणो वाच्यत्वमस्मदनभिमतमित्याह—वाक्यार्थेति ।

स्वप्रकाशस्य ब्रह्मणो वाक्यजन्यज्ञानाविषयत्वात् कथं वाक्यार्थतेत्याशङ्क्याह—स्वप्रकाशस्येति । तथापि ब्रह्मणो वाक्यार्थत्वे न मानमित्याशङ्क्याह—वेदैश्चेति । नन्वत्र प्रधानपदार्थः स्वेतरपदार्थसंसृष्टः तस्येतरान्वयो वा वाक्यार्थः तदुभयमन्विताभिधानवादे प्रधानपदार्थवाचकपदशक्यमेवेति तत्र व्यभिचार इत्याशङ्क्याह—न चान्वितेति । पदार्थविशेषान्वयस्य तद्विशिष्टप्रधानपदार्थस्य वा वाक्यार्थत्वात् । तदुभयस्य च तद्वाक्यस्थपदशक्त्यगोचरत्वात् न व्यभिचार इत्यर्थः । न चैवमपि संसर्गो वाक्यार्थ इत्यादि वाक्यार्थे व्यभिचार इति वाच्यम् । तत्रापि संसर्गसामान्यस्य पदशक्यत्वात् पदार्थविशेषप्रतियोगिकससर्गविशेषस्य वाक्यार्थस्य संसर्गपदशक्त्यगोचरत्वात् । अन्यथेतरपदवैयर्थ्यापातादिति भावः । तद्वाक्यार्थस्यापि तत्पदशक्तिगोचरत्वे बाधकाभावादप्रयोजकत्वमित्याशङ्क्याह—न चेति । तादृगुपस्थितेरिति । सत्यज्ञानानन्दात्मकं ब्रह्मेत्येवमाकारोपस्थितेः प्रसङ्गादित्यर्थः ।

किञ्च वाक्यार्थे ब्रह्मणि किं सत्यादिपदानां एकमेव प्रवृत्तिनिमित्तं उत नाना, आद्ये दोषमाह—सर्वपदानामिति । द्वितीये निर्विशेषस्य वाक्यार्थब्रह्मणो न वाच्यत्व-

एकपदेनैव तादृगुपस्थितेः, पदान्तरवैयर्थ्यस्य च प्रसंगात्। सर्वपदानां तत्र शक्तौ सत्यज्ञानादिपदानां पर्यायतापत्तिश्च। प्रवृत्तिनिमित्तभेदे च विशिष्टस्य धर्ममात्रस्य वा शक्यतापातात्। नागमाभिमतब्रह्मणः शक्यत्वम्।

सर्वपदलक्षणायां तु पदान्तरवैयर्थ्यपरिहारं वक्ष्यामः। सत्यादिपदं न ब्रह्म-वाचकं तत्प्रतिपादकवाक्यैकदेशपदत्वात्। यत् यदर्थवाक्यैकदेशपदं न तत् तद्वा-चकम् घटादिपदवत्। वाक्यार्थस्य तदेकदेशपदार्थत्वे सह श्रुतनिखिलपदानां परस्परार्थान्वितस्वार्थबोधकता व्युत्पत्तिसिद्धा बाध्येत। न च लक्ष्यत्वेऽप्ययं दोषः, प्राशस्त्यस्येव एकस्याप्यनेकपदलस्यत्वसंभवात्। न च लक्ष्यस्यापि शक्यसंबन्धि-तया पूर्वमवगमात् ब्रह्मणोऽपूर्वताक्षतिः मानान्तरं विनापि विचारेणैव तदवगमात्।

वाक्यार्थस्य लक्ष्यत्वमेव

किञ्च अभिहितान्वयवादिनामन्विताभिधानवादिनां वा वाक्यार्थमात्रं

---

मित्याह—प्रवृत्तीति। त्वन्मतेपि एकपदलक्ष्यस्यैव पदान्तरलक्ष्यत्वाद् तद्वैयर्थ्यमित्याश-ङ्क्याह—सर्वपदेति। सत्यज्ञानानन्दाद्यभेदसंशयविरोधिप्रतीतेरेकैकपदादनुत्पत्तेः तस्या वाक्यैकसाध्यत्वमनन्तरवादे वक्ष्यत इत्यर्थः। शब्दपक्षकानुमानमप्याह—सत्यादीति। घटादिपदवदिति। न च घटादिलक्षणवाक्यस्थघटादिपदे व्यभिचारः। तस्याप्यतिदेश-कस्य स्वरूपमात्रलक्षकत्वादिति भावः। तद्वाक्यार्थस्य तत्पदवाच्यत्वे प्राथमिकशब्द-सामर्थ्यव्युत्पत्तिविरोधश्चेत्याह—वाक्यार्थस्येति। एकस्यानेकपदलक्ष्यत्वमपि न कुत्रापि दृष्टमिति ब्रह्मणोऽपि तदनुपपत्तिशङ्कायामाह—न च लक्ष्यत्वेऽपीति। वायुर्वै-क्षेपिष्ठा देवतेत्यादेः एकप्राशस्त्यलक्षकत्वाभ्युपगमात्। अर्धमन्तर्वेदीत्यादेश्चैकमध्यदेश-लक्षकत्वान्न तदनुपपत्तिरित्यर्थः। मानान्तरेण शक्यसंबन्धितयाऽवगतस्यैव तीरादेः गङ्गादिपदलक्ष्यत्वदर्शनात् ब्रह्मणोऽपि लक्ष्यत्वे तथाऽवगतत्वमेष्टव्यम्। ततश्चापूर्व-ताक्षतिरित्याशङ्क्य लक्ष्यस्य वाक्यसंबन्धितयाऽवगतिरेव लक्षणायां निमित्तं न माना-न्तरेण गौरवात्। ततश्च शक्येन सत्त्वादिविशिष्टेन लक्ष्यस्य विशेष्यस्य तादात्म्यसंब-न्धस्य तर्केणैव निर्णयाल्लक्षणोपपत्तिः मानान्तरासिद्धत्वादपूर्वता चेत्याह—न च लक्ष्य-स्येति।

इतोऽपि न लक्ष्यस्य मानान्तरेणावगमनियम इत्याह—किञ्चेति। न चान्विता भिधानवादे इतरान्वयस्य पदशक्यत्वात् शक्त्यैव वाक्यार्थधीरिति वाच्यम्। तथाप्य-न्वयविशेषस्यैकैकपदशक्त्यगोचरत्वात् समुदाये शक्त्यन्तराभावाच्च लक्षणयैव तत्प्रती-तिरुपेयेति भावः। पदानां स्वशक्तिभिरेव पदार्थस्मरणद्वारा वाक्यार्थबोधकत्वसंभवात् कथं लक्षणेत्याशङ्क्याह—न च पदेति। जातिः शब्दार्थ इति मते व्यक्तेः शक्त्यगोचरत्वे-ऽपि जातिस्तां विनाऽपर्यवसानात् शक्तिजन्यज्ञानविषयत्वमस्ति। तद्व्यावर्तयितुं अपर्यव-सानालभ्यस्येत्युक्तम्। न च साक्षाच्छक्तिजन्यज्ञानविषयस्यैव शक्यत्वमिति वाच्यम्।

लक्ष्यमेव वक्तव्यम् । अन्यथा तत्प्रतिपत्त्यनुपपत्तेः । न च पदशक्त्यैव पदार्थज्ञानद्वारा वाक्यार्थप्रमा, अपर्यवसानालभ्यस्य शक्तिजन्यज्ञानविषयस्य शक्यत्वनियमेन वाक्यार्थेऽपि शक्यत्व प्रसंगात् । नहि जातिपदार्थवादिनां व्यक्तिरिव पदार्थसंसर्गोऽपर्यवसानलभ्यः येन शक्तिजन्यज्ञानविषयत्वेऽपि वाच्यत्वं न स्यात् । तथात्वे वा व्यक्तिरिवैकपदादपि संसर्गविशेषो भायात् । आकाङ्क्षाद्यपेक्षाऽभावप्रसंगाच्च । विनिगमकाभावेन पर्यायतापत्तेश्च । न च विनापि वृत्त्या पदानामाकाङ्क्षादिमहिम्नैव संसर्गबोधकत्वमस्त्विति वाच्यम् । प्रतिपादनसमर्थस्य हि आकाङ्क्षादिसहकार्यपेक्षणम् सामर्थ्यं च शब्दस्यार्थे वृत्तिरेव ।

तथा च वाक्यार्थज्ञानं लक्षणाजन्यं शक्त्यजन्यत्वे सति शब्दजन्यत्वात् सम्मतवत् । अन्यथा वाक्यार्थज्ञाने शाब्दत्वं न स्यात् । न च लाक्षणिकत्वे पदानां संसर्गाननुभावकत्वं, संसर्गस्यैव सर्वपदैर्लक्ष्यत्वात् । तस्य च पूर्वमननुभूतत्वात् । लाक्षणिकगङ्गापदस्यापि अन्वयप्रतियोग्युपस्थापकतया पदान्तरवदनुभवजन-

---

विशेषणवैयर्थ्यात् । उक्तविधया गङ्गादिपदस्यापि तीरबोधकत्वसंभवात् तत्रापि लक्षणाभावप्रसङ्गाच्चेति भावः । वाक्यार्थस्यापर्यवसानलब्धत्वात् न शक्यतेत्याशङ्क्याह— नहीति । जातेर्नियमेन व्यक्तिपारतन्त्र्योपलम्भात् तया विना जातेः अपर्यवसानम् । पदार्थस्य त्वपूर्वं वाक्यार्थपारतन्त्र्यानुपलभ्यात् न तेन विना तदपर्यवसानमित्यर्थः ॥

वाक्यार्थस्यापर्यवसानलभ्यत्वे दोषान्तरमाह—तथात्व इति । वाक्यार्थे वृत्तिं विनाऽपि पदानां सहकार्यनुरोधेन तद्बोधकत्वसंभवात् न लक्षणयापि कृत्यमित्याशङ्क्याह – न च विनापीति । वृत्तिरेवेति । तथा चमुख्यवृत्त्यसंभवे शक्यसंबन्धिनि बोधजननसामर्थ्यरूपलक्षणावृत्तिरभ्युपेयेति भावः । तर्कितेऽर्थे प्रयुङ्क्ते—तत्राचेति । मुख्यार्थज्ञाने व्यभिचारवारणाय–शक्त्यजन्यत्व इति । तस्य शक्तिजन्यत्वात् । तावत्युक्ते शब्दशक्त्यजन्ये चाक्षुषज्ञाने व्यभिचारः तन्निवारणाय—शब्दजन्यत्वादिति । तत्र शब्दत्वेन शब्दजन्यत्व विवक्षितम् ततो न शब्दगोचरप्रत्यक्षवृत्तौ व्यभिचारः । नापि घटव्यक्तिजन्ये ज्ञाने व्यभिचारः तस्यापि लक्षणाविशेषत्वादिति भावः ।

वाक्यार्थज्ञानस्य शब्दवृत्त्यजन्यत्वे बाधकमाह—अन्यथेति । लाक्षणिकपदं स्मारकमेव नानुभावकं ततश्च वाक्यस्य संसर्गलक्षकत्वे तदनुभावकत्व न स्यादिति वदन्तं तार्किकं प्रत्याह—न च लाक्षणिकत्व इति । अधिगतार्थत्वं हि स्मारकत्वे तन्त्रम् । संसर्गविशेषस्य चापूर्वत्वात् लक्षकपदानामपि तदनुभावकत्वं युक्तमित्यर्थः । अन्यत्रापि लक्षकपदस्य अननुभावकत्वमसिद्धमित्याह—लाक्षणि कति । शक्तस्यैवानुभावकत्वसंभवे न लाक्षणिकस्यापि तत्कल्प्यमित्याशङ्क्ययामाह—पदस्येति । शक्तत्वं हि पदार्थोपस्थितिप्रयोजकवृत्तिविशेषवत्त्वं तच्च पदार्थोपस्थापकत्वापेक्षया गुरुशरीरमित्यर्थः । किञ्च शक्तिभ्रमे सति अशक्तत्वं प्रयोजकमित्याह—अशक्तादपीति । अन्वयप्रतियोगी तच्छब्दार्थः

त्वाच्च । पदस्यानुभावकत्वे अन्वयप्रतियोग्युपस्थापकत्वमेव तन्त्रम् । न तु शक्तत्वं गौरवात् । अशक्तादपि तदुपस्थितिदशायां ततोऽनुभवदर्शनात् । समभिव्याहृतपदानां संभूयकारित्वव्युत्पत्तिविरोधाच्च । विभक्तेः स्वप्रकृत्या सह स्वार्थान्वयबोधकत्वानुभवाच्च । न च वाक्ये शक्त्यभावात् कथं तेन तत्संसर्गो लक्षणीयः शक्यसंबन्धाभावादिति वाच्यम् । पदसमूहो हि वाक्यम् तत्समूहश्च एकधर्मावच्छिन्नानि पदान्येव तानि च शक्तानीति तत्संसर्गस्तदर्थसंबन्ध्येव लाक्षणिकपदार्थसंसर्गोऽपि परम्परया शक्यसंबद्ध एव । अन्यथाऽर्थवादपदसमुदाये लक्षणा न स्यात् । वाक्यार्थप्रतीत्युद्देशेन वाक्यप्रयोगानुपपत्तिर्लक्षणाबीजम् ।

पदानां वृत्तिद्वयनिरासः

नन्वेवमेकस्मिन्प्रयोगे पदेषु वृत्तिद्वयं विरुद्धमिति चेत्, न, एकस्य ज्ञानस्य वृत्तिद्वयाजन्यत्वात् ज्ञानभेदस्यावश्यकत्वात् । गङ्गायां यादांसि घोषश्चेत्यत्र तात्पर्यज्ञाने युगपदन्वयबोधस्य परैरभ्युपेतत्वाच्च । पदार्था अपि संसर्गावच्छेदकतयाऽनु-

---

लक्षकपदस्याननुभावकत्वे प्राथमिकसामान्यव्युत्पत्तिविरोधश्चेत्याह—समभिव्याहृतेति । किञ्च गङ्गापदस्याननुभावकत्वे तद्गतसप्तमीविभक्तेरप्यनुभावकत्वं न स्यादित्यभिप्रेत्याऽऽह—विभक्तेरिति । लक्षणायाः शक्यसंबन्धिविषयत्वात् वाक्यस्य च शक्याभावात् न लक्षणेत्याशङ्क्याह—न च वाक्य इति । एकधर्मावच्छिन्नानीति । एकज्ञानेन क्रोडीकृतानीत्यर्थः । एवं तर्हि गङ्गायां घोष इत्यादौ न संसर्गस्य लक्ष्यता । तीरादेरमुख्यार्थत्वेन तत्संसर्गस्य मुख्यसंबन्धाभावादित्याशङ्क्य तीरादिद्वारा तस्यापि मुख्यसंबन्धोऽस्तीत्याह—लाक्षणिकेति । साक्षादेव मुख्यसंबन्धस्य लक्षणाहेतुत्वे दोषमाह—वाक्यार्थेति । ननु मुख्यार्थान्वयानुपपत्तेर्लक्षणाबीजत्वात् गामानयेत्यादौ च तदभावान्न लक्षणेत्याशङ्क्य विषंभुङ्क्ष्वेत्यादौ तदभावादन्यदेव लक्षणाबीजमित्याह—नन्विति । अनेन वाक्येन एतत्संसर्गादिकं जानातु' इति प्रतीत्युद्देशेन यः प्रयोगः तदनुपपत्तिरित्यर्थः । तथा च परम्परया वह्निवैशिष्ट्यप्रतीत्युद्देशेन प्रयुक्ते धूमोऽस्तीति वाक्ये लक्षणेति भावः ।

पदानां पदार्थेषु शक्तिः संसर्गेषु लक्षणेत्यनुपपन्नम् सकृत्प्रयुक्तपदानां वृत्तिद्वयेन बोधकत्वादर्शनादिति चोदयति—नन्विति । पदार्थवाक्यार्थज्ञानयोः भिन्नत्वात् असमानविषयत्वाच्च वृत्तिद्वयमावश्यकमित्याह—नैकस्येति । एकस्मिन् प्रयोगे मुख्यामुख्यार्थद्वयविवक्षया वृत्तिद्वयवत्ताऽन्यत्रापि दृष्टेत्याह—गंगायामिति । ननूपस्थितपदार्थविशेषसंसर्ग एव वाक्यार्थः । तस्य लक्ष्यत्वे पदार्थानामपि लक्ष्यतयाऽजहल्लक्षणा स्यात् । सा चानुपपन्ना, शक्याशक्यसाधारणरूपस्य लक्ष्यतावच्छेदकस्याभावात् इत्याशङ्क्याह—पदार्था अपीति । गङ्गापदात् गङ्गाविशेषिततीरोपस्थितावपि तत्र नाजहल्लक्षणोपेयते । तत्कस्य हेतोः? छत्रिणो यान्तीत्यादाविवैकधर्मावच्छिन्नस्वतन्त्रपदार्थद्वयानुपस्थितेः । एवं वाक्यार्थप्रमितावपि पदार्थानां संसर्गावच्छेदकतयैव प्रतीतेः स्वातन्त्र्येण तदेकधर्मावच्छिन्नतया

२

श्रूयन्ते शब्दोऽनित्य इति प्रयोग इव शब्दत्वम्। अतो वाक्यार्थस्य ब्रह्मणो लक्ष्यत्वमविरुद्धम्।

शुद्धादिपदानामपि लक्षणा

एतेन सत्यादिवाक्यस्थपदानां ब्रह्मण्यशक्तावपि अर्थान्तरनिष्ठशुद्धादिपदानां किमिति न तत्र शक्तिः, तत्रोक्तबाधकाभावादिति प्रत्युक्तम्। तस्य कदाचिदपि ब्रह्मादिपदासमभिव्याहारप्रसङ्गात्। किञ्च विशिष्टब्रह्मशक्तैः केवलधर्मशक्तैर्वा पदैः निर्गुणब्रह्मप्रमितिसिद्धौ न तत्रापि शक्तिः कल्प्या। अन्यलभ्ये तदयोगात्। मुख्यार्थत्वाय शब्दशक्तिकल्पनायां गङ्गापदस्यापि तीरे शक्तिः कल्प्येत। ततश्च ब्रह्मपदं वृद्धिविशिष्टवाचकं वृद्धिश्चोपचयः। स चात्र सर्वात्मत्वयोग्यता, न त्ववयवोपचयः। नापि गुणाधिक्यं, निर्गुणत्वात्। गुणाधिक्यमात्रस्य सर्वत्रापि सुलभ-

---

तत्राप्रतीतेः जहल्लक्षणैवात्र युक्तेत्यर्थः। अनित्यः शब्द इत्यत्र शब्दपदवाच्यस्य शब्दत्वस्यानित्यतानुपपत्तेः तद्व्यक्तिमात्रमुपादाय तस्य अनित्यत्वबोधे यथा तदवच्छेदकतया शब्दत्वं भाति तथा पदार्था अपीत्याह—शब्दोऽनित्य इति। नन्वेवमपि वाक्यार्थस्य शक्यसम्बन्धित्वेन प्रागनवगमात् कथं तत्र लक्षणेति चेन्न। स्मारकत्वे हि पूर्वावगमापेक्षया वाक्यं च न स्मारकम्। अत आकाङ्क्षाद्यनुरोधेन अज्ञातमेवार्थं लक्षणया प्रतिपादयतीति भावः। अन्यत्रापि वाक्यार्थस्य लक्ष्यत्वसाधनफलमाह—अत इति।

ननु शुद्धमुक्तादिपदानां लोको मालिन्याद्यभावविशिष्टे शक्तत्वात् ब्रह्मणोऽपि तद्वाच्यत्वे पर्यायत्वादिदोषाभावान्न सर्वपदवाच्यं ब्रह्मेत्याशङ्क्याह—एतेनेति। मालिन्यादिनिवृत्तिविशिष्टविषयस्य शुद्धादिपदस्य निर्धर्मके ब्रह्मणि प्रवृत्त्यनुपपत्तिः तत्र शक्त्यन्तरमेष्टव्यम्। तथा च पर्यायतापत्त्या ब्रह्मणि सहप्रयोगो न स्यादित्याह—तस्येति। किञ्च किं वाक्यार्थब्रह्मप्रमितये तत्र सत्यादिपदानां शक्तिरुपेयते उत तस्य तत्पदमुख्यार्थत्वाय। नाद्यः लक्षणयापि तत्प्रमितिसंभवादित्याह—किञ्चेति। द्वितीये दोषमाह—मुख्यार्थत्वायेति। ब्रह्मादिपदं कस्य वाचकं तेन कथं वा ब्रह्म लक्ष्यमिति वीक्षायां वाच्यार्थं तावदाह—ततश्चेत्यादिना।

सर्वात्मत्वयोग्यतेति। निरतिशयोपचयस्य सर्वात्मत्व एव पर्यवसानात् प्रकरणोपपदादिसंकोचकाभावेन निरतिशयमहत्त्वस्य ब्रह्मपदात् प्रतीतेः तद्विशिष्टं तद्वाच्यमित्यर्थः। निरवयवे निर्गुणे ब्रह्मणि अन्यादृशाधिक्यमसंभवीत्याह—नत्वित्यादिना। किञ्च गुणभूयिष्ठत्वमात्रं ब्रह्मपदार्थः सकलगुणवत्त्वं वा? आद्ये पृथिव्यादेरपि तदर्थत्वापात इत्याह—गुणाधिक्येति। न च गुणाधिक्यस्य अन्यत्र सत्त्वेऽपि पङ्कजादिपदवत् एकत्र प्रयोगनियमान्नातिप्रसङ्ग इति वाच्यम्। तत्र तामरसत्वादिवत् प्रयोगनियामकधर्माभावात्। न च महत्त्वविशिष्टस्य वाच्यत्वेऽप्ययं दोषस्तुल्य इति वाच्यम्। संकोच-

त्वात् सर्वगुणवैशिष्ट्यस्य तदर्थत्वे सर्वात्मत्वस्याप्यन्तर्भावादावश्यकत्वात्। स्वरूपोपचयरूपत्वाच्च तदेव ब्रह्मशब्दार्थः। आत्मशब्दार्थोऽपि व्याप्तिरूपसातत्यविशिष्टः। एवं सत्यादिशब्दार्थोऽपि बाधायोग्यत्वादिविशिष्टः शुद्धपदमपि दोषाभावविशिष्टविषयम्। एवमन्येषामपि द्रष्टव्यम्। न चैवं धर्ममात्रमेव शब्दार्थोऽस्त्विति घटादितुल्यमेव ब्रह्मेति वाच्यम्। विनिगमकाभावेन नियमेन संगतिग्रहोपस्थितस्य विशिष्टस्यैव शक्यत्वात्। घटादेस्त्वानन्त्यात् विशिष्टमप्यनन्तमेवेति अनन्तशक्तिविषयत्वेन कल्पनागौरवेण जातिमात्रस्यैव शक्यत्वात्। व्यक्तेरपर्यवसानलभ्यत्वात्। ब्रह्मादिपदानां धर्ममात्रवाचकत्वेऽपि घटादिवदपर्यवसानान्न ब्रह्मलाभः, सत्यज्ञानानन्दात्मकब्रह्मणो वाच्यसंबन्धितया पूर्वमज्ञातत्वात् शक्यसंबन्धितया ज्ञातस्यैव धर्मिणोऽपर्यवसानाल्लाभः।

---

काभावादिपर्यालोचनया निरतिशयमहत्वविशिष्टस्यैव एतद्वाच्यत्वेनेह निर्णयादन्यत्र तदभावादिति भावः।

द्वितीये सर्वगुणवैशिष्ट्यस्य सर्वगुण्यात्मतां विनाऽयोगात् सर्वात्मत्वमावश्यकमित्याह—सर्वेति। सर्वात्मकता कस्योपचय इति वीक्षायामाह—स्वरूपेति। व्याप्तिरूपेति। अत सातत्यगमन इतिधातोः आत्मशब्दनिष्पत्तेः नैरन्तर्येण संबन्धित्वं तदर्थः। तच्च सर्वदेशकालसंबन्धित्व एव पर्यवस्यतीति व्यापित्वविशिष्ट आत्मपदार्थः इत्यर्थः। तथा चोक्तम्—यच्चास्य सन्ततो भावस्तस्मादात्मेति गीयते इति। बाधायोग्यत्वादीत्यादिपदेन वृत्तिविशेषोपाधिकचैतन्येषु कल्पितज्ञानत्वादिकं गृह्यते। नित्यमुक्तादिपदानामपि ध्वंसप्रतियोगित्वबन्धाद्यभावविशिष्टं शक्यमित्याह—एवमिति। ननु घटादिपदानां घटत्वादिवाच्यमिव उक्तधर्मा एव ब्रह्मादिपदशक्याः, न तद्विशिष्टं ब्रह्म ततश्च ब्रह्मणः शब्दशक्यगोचरत्वेऽपि न घटादितो विशेष इति नेत्याह—न चैवमिति। घटादेरपि सङ्गतिग्रहसमये नियमेनोपस्थितत्वात् तत्रापि विशिष्टस्य शक्यत्वापात इत्याशङ्क्य वैषम्यमाह—घटादेरिति। ब्रह्मणोऽप्यपर्यवसानादेव लाभसंभवान्न विशिष्टे शक्तिरुपेयेत्याशङ्क्याह—ब्रह्मादीति। शक्यसंबन्धितया ज्ञातस्येति। शक्याश्रयतया ज्ञातसजातीयस्येत्यर्थः। ततश्चाज्ञातस्यापि घटादेरपर्यवसानाल्लाभसंभवः। घटत्वादिसंबंधिनः प्रमेयत्वादेर्न लाभः।

ननु बाधायोग्यत्वादिधर्माश्रयतया ब्रह्मणोऽनवगतौ तत्र सत्यादिपदानां सङ्गतिग्रहायोगात् तदवगतिर्वाच्या। तथा चापर्यवसानाल्लाभसम्भव इति चेन्न। वस्तुतःसत्यादिपदात्मकजगदात्मतामापन्नब्रह्मण एव तदा ग्रहणात् ततस्तद्विलक्षणस्य वाक्यार्थब्रह्मणोऽपर्यवसानाल्लाभायोगात्। न च विचारेण तादृशं ब्रह्म बुद्धमिति वाच्यम्। तस्य तर्करूपतया स्वयमप्रमाणत्वेन वाक्यार्थनिर्णयोपकारकत्वात् मानावगत-

तथाचाह--भवनाथः—लिङः कार्यत्वसामान्यवचनत्वे स्थायिरूपकार्यविशेषोऽनन्यप्रामाणको न प्रतीयेतेति। अतः सत्यज्ञानाद्यात्मके ब्रह्मणि ब्रह्मादिपदानां लक्षणैव। न च ब्रह्मादिपदैः, तत्तद्धर्म्युपस्थितौ वाक्याद्विशेषसिद्धिरिति वाच्यम्। तथापि वाक्यार्थस्य ब्रह्मणो लक्ष्यत्वात्। नहि पदार्थैकदेशस्यापदार्थस्य वाऽन्वयो युक्तः, किञ्चास्य वाक्यार्थत्वात् प्रवृत्तिनिमित्ताभावाच्चावाच्यत्वमिति कथं घटाद्यविशेषः।

यत्तु 'लक्ष्यं' 'अवाच्यं' इत्यादिपदवाच्यत्वात् ब्रह्मणो न सर्वपदलक्ष्यत्वमिति तन्न, तत्र प्रमाणाभावात्। किं सर्वशब्दलक्ष्यत्वमुपपादयितुं तस्य तत्पदवाच्यत्वं उत लक्ष्यादिपदप्रवृत्तिनिमित्तस्य ब्रह्मणि सत्त्वेन त्वदुक्तानवस्थापरिहाराय वा? नाद्यः, लक्ष्यादिपदवाच्यत्वे तदयोगात्।

---

स्यैवापर्यवसानलभ्यत्वात् विचारात् प्रागपि सत्यादिपदात् ब्रह्मप्रतीतेश्च तस्य न विचाराधीनापर्यवसानाल्लभ्यतेति भावः। मानान्तरेणेतरविविक्ततया शक्यसंवन्धावगमं विना नापर्यवसानाल्लाभ इत्यत्र मीमांसकधौरेयस्य सम्मतिमाह—तथा चाहेति। लिङादेः कार्यत्वसामान्यवाचकत्वेऽपि क्रियातिरिक्तकार्यस्य शक्यसंबन्धितया विमर्शावगतस्य अपर्यवसानाल्लाभात् न लिङादिपदशक्यतेति चोद्यमयुक्तं तथापि तस्य तेन रूपेण मानान्तरेणानवगमान् अपर्यवसानाल्लाभासंभवादिति भवनाथवचनार्थः। वाक्यार्थब्रह्मणोऽन्यतोऽसिद्धेः लक्ष्यत्वमुपेयमित्याह—अत इति।

ननु ब्रह्मादिपदैः अपर्यवसानात् तद्धर्मिमात्रोपस्थितौ द्रव्यं घट इत्यत्रेव सामानाधिकरण्यबलादेव धर्म्यभेदः सिद्धयति किं तत्र लक्षणयेति नेत्याह—न च ब्रह्मेति। यद्यपि त्वदुक्तविधया सत्यज्ञानाद्यभेदः सिध्यति तथापि द्रव्यं घट इत्यत्र द्रव्यत्वघटत्वविशिष्टयोः अभेदवदत्रापि सत्यत्वादिविशिष्टानामभेदः स्यात्। न च स शास्त्रप्रतिपाद्यः निर्धर्मकसत्याद्यात्मकब्रह्मणएव तत्प्रमेयत्वात्। अत्र च लक्षणा आवश्यकीत्याह—तथापीति। धर्मविशिष्टस्य धर्ममात्रस्य वा पदवाच्यत्वेऽपि वाक्यात् धर्मिणामेवाभेदान्वयबोधः किं न स्यादित्यत आह—न हीति। पदशक्तिगोचरस्य पदार्थान्तरेणान्वयनियमात् अन्यथा पदादुपस्थितिवैयर्थ्यात् विशिष्टस्य वाच्यत्वमते तदेकदेशधर्मिमात्रस्य, धर्ममात्रस्य वाच्यत्वमते नु अवाच्यधर्मिमात्रस्यान्वयो न युक्त इत्यर्थः। जातिवाचकपदैः व्यक्तिर्लक्ष्येति मतेपि वाक्यार्थब्रह्मणः ततो विशेषमाह—किञ्चेति। घटादेर्वाच्यत्वमतेऽपि वाक्यार्थब्रह्मणः ततो विशेषमाह—प्रकृतीति। न च हेत्वसिद्धिः। तस्यानन्तरं वक्ष्यमाणत्वादिति भावः। एवमौपनिषदब्रह्मणः सत्यादिवाक्यलक्ष्यत्वमभिधाय परोक्तचोद्यमनूद्यापवदति—यत्त्वित्यादिना। ब्रह्मणि सत्त्वेनेति। तस्य तत्पदवाच्यत्वमित्यनुषङ्गो द्रष्टव्यः। त्वदुक्तानवस्थेति। ब्रह्मणः सर्वपदलक्ष्यत्वे लक्षपदवाच्यार्थसंबन्धितया शब्दान्तरेण ज्ञातता वाच्या। तस्यापि तल्लक्षकत्वात्। तदर्थसंबन्धितयाऽन्येन ज्ञातव्यमित्यनवस्थापरिहाराय वा तस्य वाच्यतेत्यर्थः। तदयोगादिति। सर्वशब्दलक्ष्यत्वायोगादित्यर्थः।

ननु ब्रह्मणो लक्ष्यादिपदवाच्यताऽभावे कथं ब्रह्म सर्वपदलक्ष्यं वाच्यान्यदिति वा प्रतिपादनीयमिति चेत्। का तर्हि प्रतिपादनेऽनुपपत्तिः। न तावत् तेन विना-योग्यताद्यभावः, प्रत्युत तस्मिन् सत्येव न योग्यता। नापि लक्ष्यादिपदवाच्या-प्रसिद्धचा तल्लक्षणानुपपत्तिः। तत्तत्पदलक्ष्यतीरादेः लक्ष्यपदार्थत्वात्। ननु लक्ष्य-पदेनापि तस्य लक्ष्यत्वे कथं वाक्यार्थप्रतीतिः। तत्तल्लक्ष्यज्ञानं विना तदयोगा-दिति चेत् तर्हि स एव दोषः। नापि द्वितीयः तत्तद्धर्मविशिष्टस्य ब्रह्मणो वाच्य-त्वेऽपि तत्तदधिष्ठानस्य विशेष्यस्य तदभावात्। विशेष्यस्य सर्वस्मादपि विशि-ष्टादन्यत्वात् तल्लक्ष्यते। अवाच्यपदस्यापि वाच्यान्यत्वविशिष्टे ब्रह्मणि शक्तिर-विरुद्धा। लक्षणयाच ततः स्वरूपप्रतिपत्तिः। अन्यथा योग्यताविरहात्।

---

ब्रह्मणो लक्ष्यादिपदावाच्यत्वे तदनुवादेन लक्ष्यत्वादिविधानानुपपत्तिरिति शङ्कते—नन्विति। लक्ष्यादिपदावाच्यस्य तद्योग्यताभावात् तदनुपपत्तिः उत लक्ष्यादिपदवाच्या-प्रसिद्धचा तस्य लक्षणयाऽपि तद्बोधकत्वायोगात्। किञ्च अलक्ष्यपदेनापि लक्ष्यत्वे ब्रह्मणः तद्वाच्यसंबन्धितया शब्दान्तरेण प्रागनवगमादनुपपत्तिरित्यभिप्रेत्याह—का तर्हीति। आद्यं निरस्यति—न तावदिति। ब्रह्मणो लक्ष्यादिपदावाच्यत्वेऽपि तस्य सर्वपदलक्ष्य-त्वादेरविरोधाल्लक्षणया तद्बोधसंभवादित्यर्थः। लक्ष्यादिपदवाच्यत्व एव तद्वाक्यमयोग्य-ताग्रस्तमित्याह—प्रत्युतेति। द्वितीयं निरस्यति—नापीति। नचैवमपि सर्वपदलक्ष्या-वाच्यमित्यादिपदवाच्यमप्रसिद्धमिति वाच्यम्। तस्य शक्तानेकपदसमभिव्याहाररूप-वाक्यत्वेनापदत्वादिति। तृतीयमुद्भाव्य परिहरति—नन्वित्यादिना। स एवेति। तत्रो-क्तानवस्थैव दोषः न त्वन्यः स चानन्तरमेव निरसिष्यत इति भावः। ब्रह्मणि प्रवृत्ति-निमित्तसत्त्वेनेति कल्पं दूषयति—नापीति। ब्रह्मणि किं वास्तव प्रवृत्तिनिमित्तमस्तीत्यु-च्यते उतारोपितं? नाद्यः, तस्यानन्तरमेव निरसिष्यमाणत्वात् इत्यभिप्रेत्य द्वितीये तद्विशिष्टस्य वाच्यत्वेऽपि तस्यापरमार्थत्वान्न परमार्थब्रह्मणो वाच्यतेत्याह—तत्तदिति। तत्तद्विशिष्टस्याब्रह्मत्वे किं पुन र्ब्रह्म यस्य लक्ष्यतेति वीक्षायामाह—विशेष्यस्येति। चैतन्यमेव कल्पिततत्तद्धर्मविशिष्टताकारेण तत्तत्पदवाच्यमपि सकलविशिष्टान्यत् निर्विशेषणविशेष्यरूपं सकलपदलक्ष्यम्। तथा च यद्यद्ब्रह्मत्वेनोपेतं तत्तदब्रह्मेति परोक्तं निरस्तम्। विशेष्यस्य निर्धर्मकस्यैव ब्रह्मत्वादिति भावः। अवाच्यादिशब्दानां पदत्वमङ्गीकृत्याह—अवाच्येति। वाच्यान्यस्वरूपं एवाच्यत्व नाम धर्मो व्यवहाराय कल्पितः। तद्विशिष्टरूपं अवाच्यपदवाच्यम् ततश्चैतदपि वाक्यार्थं ब्रह्म लक्षणयैव बोध-यति यावद्वाच्यान्यस्वरूपं शक्त्या बोधयतः स्वव्याघातात्। एवं चावाच्यपदलक्ष्यस्य तद्वाच्यसंबन्धमात्रं सिध्येत् न त्ववाच्यत्वमिति निरस्तम्। अवाच्यत्वधर्माश्रयमात्रस्य तेन लक्ष्यमाणत्वादिति भावः। अङ्गीकारं परित्यजति—वस्तुत इति।

अवाच्यादिपदानां मुख्यार्थता

वस्तुतस्तु अवाच्यमिति वाक्यमेव नञ्पदलक्षणया वाच्यान्यब्रह्म प्रतिपादयति। ननु स्वरूपमात्रमेव लक्ष्यादिपदशक्यं भवत्विति चेत् न, शक्तेः परमतेऽपि विशिष्टविषयत्वात्।

अनवस्थाशङ्कानिरासः

नापि त्वदुक्तानवस्था विचारादिना तस्य वाच्यसंबन्धित्वेन निर्णीतत्वात् पूर्वमपि सत्यत्वादेः सदादिस्वरूपमात्रसंबन्धित्वस्य समानाधिकरणवाक्यत्वेनैकार्थनिर्णयसंभवेन एकार्थनिष्ठत्वस्यावगन्तुं शक्यत्वात्। लक्ष्यतावच्छेदकं च नात्रापेक्षितम्। लक्ष्यस्वरूपस्य स्वरूपतो व्यावृत्तत्वात्, एकत्वाच्च। ननु लक्ष्यस्य लक्षक-

---

नामपदयुक्तस्य नञः पर्युदासलक्षकत्वस्य अब्राह्मणोऽयमित्यादिषु दर्शनात् लक्षणयैव तद्वाक्यं निखिलवाच्यान्यत्वं बोधयतीत्यर्थः। लक्ष्यादिपदानां विशिष्टे शक्तिः स्वरूपं तु लक्षणयैव बोध्यत इति कल्पनाद्वरं स्वरूपस्यैव शक्यत्वकल्पनमिति शङ्कते—नन्विति। पदमात्रान्निर्विकल्पकबोधायोगात् विशिष्टस्यैव शक्यत्वं परमतेऽपि वाच्यम्। सिद्धान्तेऽप्यविशिष्टं स्वरूपस्य वाक्यार्थत्वात्। तत्र पदानां शक्तत्वे पर्यायताप्रसङ्गाच्च विशिष्टस्य शक्यतेत्यभिप्रेत्याह—न शक्तेरिति।

अनवस्थापरिहाराय वाच्यत्वमुपेयमिति कल्पं निराकरोति—नापि त्वदुक्तेति। यथा विमर्शोपस्थितनियोगादौ परेषां व्युत्पत्तिः एवं सर्वेषां विशिष्टानां द्रव्यत्वादिना मिथ्यात्वेनावगतानामधिष्ठानतया विमर्शावगते ब्रह्मणि सर्वपदलक्षणेति कुतस्त्वदुक्तानवस्थेत्यर्थः। तर्हि विचारात् प्राक् लक्ष्याज्ञानात् जिज्ञासाप्रयोजकं ज्ञानं वेदान्तान्न सिद्ध्येत् इत्याशङ्क्याऽऽह—पूर्वमपीति। तथापि सत्त्वादीनामाश्रयभूतं किञ्चिदस्तीति ज्ञानसंभवात् सत्यादिपदानां समानाधिकरणतया पदार्थानामेकत्वज्ञानसंभवाच्च। तदेव लक्षणया ततोऽवगम्यत इत्यर्थः। निर्विशेषे लक्ष्यतावच्छेदकाभावात् न लक्षणेत्याशङ्क्याह—लक्ष्यतेति। प्रकारान्तरेण लक्षणमाक्षिपति—नन्विति। सत्यादिपदैः किं लक्ष्यमिति पृष्टे शब्दान्तरेणामुकमिति वक्तव्यम्। तस्यापि लक्षकत्वेन तेनापि लक्ष्यं किमिति पृष्टे पुनः शब्दान्तरेणेत्यनवस्थापातात् बोधो दुर्घट इत्यर्थः। सत्यत्वादिविशिष्टवाचकैः सत्यादिपदैः स्वरूपमात्रं लक्ष्यत इत्युक्ते योग्यताद्यनुरोधेन स्वरूपविशेषस्यैव बुद्धिस्थत्वात् न प्रश्नावकाशः। यथा-शब्दोऽनित्य इति प्रयोगस्य शब्दपदवाच्यमात्रेऽनित्यत्वबोधकत्वायोगात् व्यक्तिमात्रलक्षकत्वेऽपि योग्यतानुरोधेन व्यक्तिविशेष एवानित्यत्वान्वितत्वेनोपस्थाप्यते। इतरथा तत्रापि शब्दपदेन लक्ष्यः क इति पृष्टे शब्दान्तरेण तदभिधाने तस्यापि किञ्चिद्धर्मवाचकत्वात् तत्पर्युदासेन व्यक्तिमात्रलक्षकत्वं वक्तव्यमिति तेनापि लक्ष्यं किमिति पृच्छायां पुनस्तावत् शब्दान्तरेणेत्यनवस्थया तस्याबोधकत्वापा-

शब्दैरेव परं प्रति प्रतिपादनेऽनवस्थेति मूकतापत्तिरिति चेत्; न, ब्रह्मण उक्तविधया निर्धर्मत्वं सत्यज्ञानाद्यात्मत्वं तस्मिन् सत्यादिपदव्युत्पत्तिप्रकारं आनन्दादिस्वरूपस्यैवानन्दादिपदलक्ष्यत्वं चावगच्छतः आनन्द एव ब्रह्मेत्युपदेशादेव योग्यताद्यनुसारेण धर्मिणोरेवाभेदावगमसंभवात्। विशेषणभेदप्रयुक्तमेव भेदं विशिष्टयोरवगच्छतस्तदभेदप्रतीतेः स्वरूपविषयत्वात्।

प्रवृत्तिनिमित्ताभावादपि न ब्रह्मणि पदानां शक्तिः पारमार्थिकजातिगुणक्रियादेः असंभवात्। तदसंभवश्च लक्षणां विनापि निरूपयितुं शक्यत इति न त्वदुक्तान्योन्याश्रयः। कल्पितगुणक्रियावैशिष्ट्ये च वेदान्ततात्पर्यायोगात्।

शुद्धस्य लक्ष्यत्वे मानं श्रुतिश्च

ननु वेदान्ततात्पर्यगोचरत्वविशिष्टब्रह्मणः स्वप्रतिपादकवाक्यस्थपदाशक्यत्वसिद्धावपि न विशेष्यब्रह्मणः तत्सिद्धिरिति चेत्, न, अनुमितिर्हि पक्षतावच्छेदकधर्माश्रयस्यैवान्यत्वं विषयीकरोति। सर्वत्रापि साध्यस्य पक्षताश्रयवैशिष्ट्यैवानुमितिविषयत्वात्। निर्धर्मके ब्रह्मणि वेदान्ततात्पर्यविदुषो वेदान्ततात्पर्यगोचर इतिपदात् लक्षणया तस्यैवोपस्थितेर्वक्तव्यत्वात्। अन्यथा त्वदीयानुमानमपि नास्मदभिमतब्रह्मणो वाच्यत्वं विषयीकुर्यात्।

---

तादित्यभिप्रेत्य परिहरति—न ब्रह्मण इत्यादिना। धर्मिणोरिति। आनन्दब्रह्मपदार्थविशेष्ययोरेवेत्यर्थः। आनन्दो ब्रह्मेति वाक्यात् विशेष्ययोरेवाभेदावगमे हेतुमाह—विशेषणेति। ब्रह्मणि पारमार्थिकशब्दप्रवृत्तिनिमित्ताभावादपि न तत्र पदशक्तिरित्याह—प्रवृत्तीति। सत्यादिपदानां लक्षकत्वं विना प्रवृत्तिनिमित्ताभावो न सिध्यतीत्युक्तं निरस्यति—तदसंभवश्चेति। ब्रह्मणि जातिगुणादीनामभावात् स्वरूपस्य संबन्धस्य मानस्य च दुर्निरूपत्वात् दृश्यमिथ्यात्वनियमात्, श्रुत्यादिनिषेधाच्च तत्र पारमार्थिकप्रवृत्तिनिमित्ताभावसिद्धिरित्यर्थः। घटादिवत् कल्पितधर्मैरेव ब्रह्मणः शब्दवाच्यता किं न स्यादित्याशङ्क्य तथापि तस्य तद्विशिष्टतया न वाक्यार्थतेत्याह—कल्पितेति। ननु तात्पर्येण सत्यादिवाक्यप्रतिपाद्यं न तद्वाक्यस्थपदशक्यं इत्यत्र तात्पर्यगोचरत्वविशिष्टस्य धर्मित्वेनाभिधानात् तेन वाक्यार्थब्रह्मणो नावाच्यत्वसिद्धिरिति चोदयति—ननु वेदान्तेति। पक्षवचनेन विशिष्टोपस्थितावपि शक्यान्यत्वरूपसाध्यं विशेष्य एव सिध्यतीति परिहरति—नानुमितिरिति। विशिष्टस्य पक्षस्योपस्थितौ कथं विशेष्यमात्रे साध्यान्वय इति वीक्षायामाह—सर्वत्रेति। धूमानुमानादपि वह्न्यादिसाध्यस्य पर्वतत्वाद्याश्रयेणैव संयोगादिलक्षणवैशिष्ट्यस्यानुमितिगोचरत्वदर्शनादित्यर्थः। किञ्च शब्दोऽनित्य इत्यादाविव योग्यताद्यनुरोधेन धर्मिमात्रस्यैव लक्षणया बुद्धिस्थत्वात् तत्रैवावाच्यत्वं सिद्ध्यतीत्याह—निर्धर्मक इति।

ब्रह्मादिपदं विशिष्टस्य धर्ममात्रस्य वा वाचकं पदत्वात् सम्प्रतिपन्नवत् इति वाऽनुमानमस्तु। अत एव परोक्ता हेतवो बाधिताः अप्रयोजकाश्च। एवं यतो वाचो निवर्तन्ते अप्राप्यमनसा सहेति श्रुतिरपि शब्दस्य प्राप्तिं वारयन्ती तस्य शक्तिं ब्रह्मणि निषेधति शब्दस्यार्थेन शक्तेरेव प्राप्तित्वात्, लक्षणाया अर्थप्राप्तित्वेन तन्निषेधायोगात्। लक्षणानिषेधे "सर्वे वेदा यत्पदमामनन्ति" इत्यादिश्रुतिविरोधाच्च। मनसा सहेति च मनसः करणत्वमेव निषिध्यते स्वरूपेण निषेधायोगात्। केवलमनोगम्यत्वं वा निषिध्यते।

अमेयगुणत्वात् पदावाच्यत्वं

ननु अमेयगुणत्वं यतो वाचो निवर्तन्त इति श्रुत्यर्थ इति चेत् अमेयत्वं यदि गुणस्य मानागोचरत्वं तदा निर्गुणमेव ब्रह्मेति वाच्यत्वनिषेधः। अथ सङ्ख्याशून्य-

---

योग्यतानुरोधात् विशेष्यमात्रे साध्यानङ्गीकारे बाधकमाह--अन्यथेति। वेदान्ततात्पर्यविषयो ब्रह्म वाच्यमिति त्वदुक्तानुमानात् विशिष्टस्यैव वाच्यत्वमिति सिद्धसाधनं स्यात्। अत एव वाक्ये न लक्षणेति प्रत्युक्तम् तस्यापि योग्यताद्यनुरोधेनैव बोधकत्वादिति भावः। वेदान्तगतनिखिलपदानांविशिष्टस्य धर्ममात्रस्य वा वाचकत्वे साधितेऽर्थात् केवलस्यावाच्यत्वसिद्धिरित्यभिप्रेत्याह—ब्रह्मादीति। धर्ममात्रवाचकत्वेऽपि घटादिवदपर्यवसानात् ब्रह्मलाभ इति शङ्का प्रागेव निरस्ता।

न च विशिष्टब्रह्मण एव वेदान्तमहातात्पर्यगोचरत्वात् मदिष्टसिद्धिरिति वाच्यम्। तेषामखण्डपरत्वस्य अनन्तरवादे निपुणतरमुपपादयिष्यमाणत्वात्। किञ्च सत्यत्वादिविशिष्टं ब्रह्म न वेदान्तमहातात्पर्यगोचरं निष्प्रयोजनत्वात् सम्मतवत्। न चासिद्धिः तस्योपपादनात्। अतो न सत्यादिपदवाच्यविशिष्टरूपस्य तत्तात्पर्यगोचरतेति भावः। एवं च बहुयुक्त्युपोद्बलितस्वाच्यत्वानुमानानां प्रबलत्वात् तद्विरोधात् वस्तुत्वादित्यादय आभासा इत्याह—अतएवेति। परकीयहेतूनां श्रुतिबाधितत्वमप्याह—एवमिति। प्राप्तिनिषेधमात्रेण कथं शक्त्यभावसिद्धिरित्यत आह—शब्दस्येति। तर्हि लक्षणाया अपि लक्ष्यार्थप्राप्तिरूपत्वात् सापि न स्यादित्याशङ्क्याह—लक्षणाया इति। शक्यसंबन्धरूपायास्तस्याः परम्परासंबन्धरूपत्वात् न मुख्यप्राप्तिः सेत्यर्थः। इतोऽपि न लक्षणानिषेधस्तदर्थ इत्याह—लक्षणेति।

यच्चोक्तं मनसा सहेतिश्रवणं मनोवृत्तेरिव वाग्वृत्तेरपि निषेधायोग इति तत्राह—मनसेति। स्वरूपेणेति। कामः संकल्प इत्यादिना मनसः प्रमातृत्वाभिधानादित्यर्थः। शब्दासहकृतत्वं वा केवलशब्दार्थः। श्रुतेरन्यार्थकत्वान्न बाधकतेत्याशङ्क्य दूषयति—नन्विति। लक्षणानुपपत्त्या बोध्यते लक्षणया वा? नाद्यः तद्वाचकपदाभावादित्यभिप्रेत्याह—तन्नेति। न द्वितीयोऽपीत्याह—आनन्दमिति। "विज्ञानमानन्दं ब्रह्म," "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादिन्यायोपेतश्रुतिभिः आनन्दब्रह्मणो-

त्वं । तत्र, आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति वाक्यशेषेण ब्रह्मस्वरूपभूतानन्दस्यैव ज्ञानात् भयनिवृत्तिश्रवणेन गुणान्तरं विनाऽनुपपत्त्यभावेन लक्षणायोगात् । मुक्तिसाधनज्ञानाविषयस्य श्रुतिप्रतिपाद्यत्वायोगाच्च । प्रत्युत वाक्योपक्रमेऽनन्तगुणं प्रक्रम्य आनन्दज्ञानान्मोक्ष इत्युक्ते देवदत्तो वामेन चक्षुषा पश्यतीत्यनेन दक्षिणेन दर्शननिषेधवत् गुणान्तराणामपुरुषार्थत्वमेव प्रतिपादितं भवेत् ततश्च ब्रह्मणोऽपि हेयगुणवत्त्वमिति साधु समर्थितस्तव समयः । न चानन्द इत्यत्रापि गुणान्तरलक्षणा सिद्धान्तेऽपि तच्छब्देन लक्षणाभ्युपगमादिति वाच्यम् । आत्ममात्रज्ञानस्यैव सर्वश्रुतौ मुक्तिसाधनत्वावगमात् त्वदुक्तलक्षणायोगात् । अस्मन्मतसिद्धलक्षणायास्तथैव श्रुत्याऽभ्युपेतत्वात् । किञ्चास्मन्मतसिद्धा लक्षणा श्रुतितुल्यैव प्रसिद्धार्थानपायात् । यथा रेवतीवाक्ये एतच्छब्दस्य प्रकृताग्निष्टुद्धर्म-

---

रभेदावगमात् 'आनन्द ब्रह्मण" इति षष्ठी राहोःशिर इतिवत् द्रष्टव्येत्यभिप्रेत्य ब्रह्म स्वरूपानन्दस्येत्युक्तम् । असङ्ख्येयगुणानां प्रयोजनवत्त्वाश्रवणादपि न श्रुतिप्रतिपाद्यतेत्याह—मुक्तिसाधनेति । न केवलं प्रयोजनवत्त्वाश्रवणं, प्रत्युत निष्प्रयोजनत्वमेव श्रुतितात्पर्येण गम्यत इत्याह—प्रत्युतेति ।

आनन्द ब्रह्मण इत्यत्रानन्दपदेन गुणान्तराणामपि लक्ष्यत्वात् तेषामपि पुरुषार्थपर्यवसायित्वमित्याशंक्य गुणान्तरपरिग्रहं विनाऽनुपपत्त्यभावात् श्रुत्यन्तरविरोधाच्च नैवमित्याह—न चानन्दमित्यादिना लक्षणाभ्युपगमादिति । विशिष्टवाचकानन्दपदस्य विशेष्यमात्रे लक्षणाभ्युपगमादित्यर्थः । सिद्धान्त्यभिमतलक्षणायां नोक्तदोष इत्याह—अस्मन्मत इति । तमेव विदित्वेति श्रुतिपर्यालोचनया, आनन्दं ब्रह्मण इति श्रुतिर्लक्षणया आत्मस्वरूपानन्दमात्रज्ञानादेव भयनिवृत्तिं बोधयति इति विशेष्यमात्रलक्षणा श्रुत्यभिमतेत्यर्थः ।

श्रुतादर्थादर्थान्तरलक्षणातः श्रुतैकदेशलक्षणैव न्याय्येत्याह—किञ्चेति । श्रुतितुल्येति । मुख्यवृत्तितुल्येत्यर्थः प्रसिद्धार्थानपायादिति । श्रुतार्थस्य सर्वात्मनाऽनपायात् अश्रुतार्थस्य चानुपादानादित्यर्थः । श्रुतैकदेशलक्षणायाः श्रुतितुल्यत्वं पूर्वतन्त्रे निर्णीतं चेत्याह—यथेति । एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेत्यत्र कर्मान्तरविधौ सति एतच्छब्दस्य प्रकृताग्निष्टुद्वाचकत्वायोगेन स्वार्थात् प्रच्युतेः "अव्यक्तासु तु सोमस्यैव स्यात्" इति न्यायेन सौमिकविध्यन्ते प्राप्ते राद्धान्तितम्—एतच्छब्दस्य प्रकृतधर्मविशिष्टधर्मिवाचकत्वात् धर्मिपरित्यागेऽपि धर्ममात्रं तेन लक्षणयोपादाय तद्विशिष्टकर्मान्तरविधिसंभवान्न सौमिकविध्यन्तप्राप्तिः । न च लक्षणापेक्षयाऽव्यक्तत्वलिङ्गस्य प्राबल्यात् ततः सौमिकविध्यन्तप्राप्तिरिति वाच्यम् । अस्या लक्षणायाः श्रुतविषयत्वेन श्रुतितुल्यतया लिङ्गात् बलवत्त्वादिति ।

---

१. एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत--इत्यत्र ताण्डिकवाक्ये पूर्वप्रकृताग्निष्टुद्यागापेक्षया अन्यत् कर्म विधीयत इति निर्णीतम् । तत्र एतेन इत्यनेन पूर्वप्रकृताग्निष्टुद्धर्मकेण इत्यर्थे लक्षणा पूमी ( २-२-७ )

लक्षणायामपि श्रुतितुल्यता। अवाच्यमित्यादित्वदुदाहृतश्रुतौ साक्षाद्वाच्यत्व-निषेधाच्च।

यत्तु अद्भुतत्वमनया प्रतिपाद्यत इति। तन्न। तस्य पदार्थवाक्यार्थयोरन्य-तरत्वाभावात् लक्षणानुपपत्तेश्च। वाक्यशेषपर्यालोचनया तस्याप्यपुरुषार्थत्वेन श्रुत्याऽप्रतिपाद्यत्वात्। 'अथ कस्मादुच्यते ब्रह्मेत्यादि तु ब्रह्मणः शब्दतात्पर्य-विषयत्वाभिप्रायम्। गङ्गापदेन तीरमुच्यते इति लक्ष्येऽपि 'उच्यत' इति प्रयोग-दर्शनात्।

> तस्मादखण्डवाक्यार्थे सत्यज्ञानसुखात्मनि।
> न कस्यापि पदस्यास्ति शक्तिरित्यात्मवित्स्थितिः॥

आनन्दवृद्धिमपविद्धतदन्ययोगां त्वामामनन्ति मुनयो गुरवोऽपि वेदाः।

---

तदुक्तं वरदराजेन—एतस्येतिपदं प्रकृतवाचि सत् अग्निष्टुदुपकारकं लक्षणयो-पस्थापयति। तथा च नातीवैतच्छब्दस्य प्रकृतपरत्वत्यागः। न वा अव्यक्तत्वेन सौमिकविध्यन्त एव; चोदनालिङ्गतो वचनभेदस्यैतच्छब्दस्यैव बलवत्त्वादिति। न वाच्यं न च दृश्यतं इति त्वदुदाहृतश्रुतिविरुद्धं च त्वदनुमानमित्याह—अवाच्यमिति। यतो वाच इत्यादेः परोक्तमर्थमनूद्य दूषयति—यत्त्वित्यादिना। लक्षणानुपपत्तेश्चेति। किं मुख्यार्थान्वयानुपपत्तिः अद्भुतत्वलक्षणाबीजमुत तात्पर्यानुपपत्तिः? नाद्यः तल्लक्षणायामपि वाच इत्यस्यान्वयाभावात्। न च यत अद्भुताद्वाच इत्यन्वय इति वाच्यम्। साकाङ्क्ष-त्वेनानर्थक्यात्। न चोद्यन्त इति क्रियापदमध्याहर्तव्यमिति वाच्यम्। अध्याहारस्यैव-दोषत्वात्। प्रपञ्चोदन्तेः प्रागेवाभिहितत्वाच्च। नापि द्वितीयः उक्तदोषात्। न चाद्भुतत्वं सर्वपदलक्ष्यमिति वाच्यम्। तस्योपक्रमादावनवगतस्य तात्पर्यगोचरत्वा-योगात्। तस्य वाच्यसम्बन्धित्वेनाप्रतीतेश्चेति भावः। आनन्दज्ञानादेवं भयनिवृत्ति-श्रवणादपि नाद्भुतत्वं श्रुतिप्रमेयमित्याह—वाक्यशेषेति। ब्रह्मणो वाच्यत्वे परोदाहृत-श्रुतेर्गतिमाह—अथ कस्मादिति। वादार्थमुपसंहरति श्लोकेन।

तस्मादिति। सत्यादिवाक्यार्थस्य लक्ष्यत्वमभिधाय तस्येतरवाक्यार्थाद्वैलक्षण्यं दर्शयन् वर्तिष्यमाणवादार्थं संग्रहेणाह—आनन्दवृद्धिमिति। आनन्दप्रचुरं परमानन्द-मिति यावत्। तद्रूपत्वं मतान्तरेऽपि तुल्यमित्याशङ्क्याह—अपविद्धेति। अपविद्धो निरस्तः तदन्यस्य आनन्दादन्यस्य योगः संसर्गो यस्यां सा तथोक्तामित्यर्थः।

अखण्डानन्दरसमेव तत्त्वं 'यो वै भूमा तत्सुखं' 'अथैष एव परम आनन्दः' 'तदेतदद्वयं स्वप्रकाशं महानन्दः' 'एकधैवानुद्रष्टव्यं' 'नात्र काचन भिदाऽस्ति' इत्यादि

अन्ये प्रगल्भमतयोऽन्ययुतिं त्वयीश वाञ्छन्ति तत्र न हि किञ्चिदपि प्रमाणम् ॥ २ ॥

अखण्डार्थत्व विवरणम्

एवं लक्षणया वेदान्तवाक्यं ब्रह्म प्रतिपादयतीत्युक्तम् । तच्च वाक्यं द्विविधं एकं पदार्थनिष्ठम् यथा सत्यज्ञानमित्यादि तत्पदार्थपरम् । योऽयं विज्ञानमय इत्यादि त्वंपदार्थपरम् । अपरं अभेदरूपवाक्यार्थनिष्ठम् यथा तत्त्वमसीत्यादि । द्विविधस्याप्यस्याखण्ड एव वाक्यार्थः । तत्रादौ सत्यादिवाक्यस्याखण्डार्थत्वं चिन्त्यते –

अखण्डार्थत्वमपि निरुक्तमाचार्यैः –अपर्यायशब्दानां संसर्गागोचरप्रमाजनकत्वम् । तेषामेकप्रातिपदिकार्थमात्रपर्यवसायित्वं वा इति ।

अखण्डार्थत्वे अनुमानम्

प्रमाणमप्युक्तम्—सत्यादिवाक्यमखण्डार्थनिष्ठं ब्रह्मप्रातिपदिकार्थमात्रनिष्ठं वा लक्षणवाक्यत्वात् तन्मात्रप्रश्नोत्तरत्वाद्वा । प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवत् ।

अखण्डार्थलक्षणे परः

अत्र नवीनः—आद्यलक्षणे संसर्गशब्देन संसर्गमात्रोक्तौ अप्राप्तयोः प्राप्तिः संयोगः इत्यादिसंसर्गलक्षणवाक्येऽतिव्याप्तिः लक्षणवाक्यमात्रस्याखण्डार्थत्वात् । पदस्मारितपदार्थोक्तौ तु विषं भुङ्क्ष्वेत्यादावतिव्याप्तिः तत्र पदस्मारित-

---

श्रुतयस्तादनुसारिणश्च स्मर्तारः सम्प्रदायविदश्च प्रतिपादयन्तीत्यर्थः । निरसनीयं पक्षमाह—अन्य इति । अन्ययुतिं अन्यसंसर्गम् । प्रगल्भमतय इति परिहासोक्तिः अप्रगल्भमतय इति वा छेदः । तेषां वाञ्छा निर्विषयेत्याह—तत्र न हीति । वृत्तसंकीर्तनपूर्वकं वेदान्तेषु ब्रह्मस्वरूपलक्षकानेकवाक्यवैयर्थ्यशङ्कां निराकुर्वन् तेषां शेषशेषिभावेन विभागमाह—एवमित्यादिना । निवर्त्यभेदादेव द्वैविध्यं न तु विषयभेदादित्यभिप्रेत्याह—द्विविधस्यापीति ।

किमिदं अखण्डार्थत्वं सत्यादिवाक्यानां तद्वत्त्वे किं वा मानमिति वीक्षायामाह—अखण्डार्थत्वमपीत्यादिना । गामानयेत्यादिपदानामपि प्रमाजनकत्वमात्रमस्तीति संसर्गागोचरेत्युक्तम् । तावत्युक्ते निघण्टूपस्थितपदेष्वतिव्याप्तिः तन्निवारणायापर्यायेति विशेषणम् । पिकः कोकिले वायसः काक इत्यादिपदेष्वतिव्याप्तिवारणाय द्वितीयलक्षणे एकेति विशेषणम् ।

उक्तलक्षणादौ परोक्तदोषमनुवदति—अत्रेति । संसर्गागोचरेत्यत्र संसर्गपदेन संसर्गमात्रं विवक्षितं उत पदस्मारितपदार्थसंसर्गः ? प्रतिपिपादयिषितपदार्थसंसर्गो वा ? नाद्य इत्याह—संसर्गेति । संसर्गलक्षणवाक्यस्य तव मते लक्षणया संसर्गमात्रप्रमाप-

पदार्थाप्रतिपादकत्वात्। न चेदमपि द्विषदन्नं न भोक्तव्यमिति शास्त्रमूलकत्वात् शास्त्रीयपदस्मारितपदार्थसंसर्गप्रमापकम्। अस्य युक्तिमूलत्वेनाशास्त्रमूलत्वात्। प्रतिपिपादयिषितपदार्थसंसर्गोक्तौ चन्द्रब्रह्मादिशब्दार्थानां प्रश्नधर्मित्वेन प्रागेव सामान्यतो ज्ञाततया स्वरूपेणाप्रतिपिपादयिषितत्वात्। किञ्च शीतोष्णस्पर्शवन्तौ पयःपावकौ इत्यादौ त्वद्रीत्या संसर्गाप्रतिपादकानेकप्रातिपदिकार्थपरेऽतिव्याप्तिः। प्रकृष्टादिवाक्येऽपि संसृष्टार्थत्वस्य वक्ष्यमाणत्वेनासंभवश्च। अत एवान्त्यलक्षणमप्ययुक्तम्। असंभवात्।

२६ णदूषणम्

किञ्च प्रवृत्तिनिमित्ताभेदश्चेन्नापर्यायत्वं तद्भेदस्त्विह नास्ति अनन्तत्वादीनां शुद्धादन्यत्रासंभवात्। अनन्तानन्दादिशब्दानां च लक्षणयाऽखण्डार्थत्वे शुद्धे तदसिद्धिः। आद्यानुमाने चाप्रसिद्धविशेषणत्वम्। प्रत्यक्षादिनापीदमित्थमिति सप्रकारज्ञानस्यैवोत्पत्तेः। असिद्धिश्च सत्यत्व ज्ञानत्वादेः परापरजातित्वे तस्याब्रह्म-

---

कत्वात् तत्रातिव्याप्तिरित्यर्थः। द्वितीये दोषमाह—नदेति। न च विषपदादिनैव द्विषदन्नादेर्लक्षणया स्मारितत्वात् नोक्तदोष इति वाच्यम्: तस्य वाक्यप्रमेयत्वादिति भावः। द्विषदन्नादेः स्वपदास्मारितत्वेऽपि स्वमूलवाक्यगतपदस्मारितत्वात् नोक्त दोष इत्याशङ्क्याह— न चेदमिति। एतच्छत्रोरेतद्वधाकाङ्क्षित्वात् तदीयान्नस्य द्रव्यान्तरयोगात् वधोपायत्वसंभवात् न भोक्तव्यमिति युक्तिरेव विषवाक्यस्य मूलमित्यर्थः। तृतीये चन्द्रादिस्वरूपमात्रस्य प्रतिपिपादयिषितत्वायोगात् किञ्चिद्विशिष्टतया प्रतिपिपादयिषितत्वं वाच्यम्। तथा चासंभव इत्यभिप्रेत्याह—प्रतिपिपादयिषितेति। न च प्रश्नधर्मित्वादेव ज्ञातेऽप्यज्ञातत्वमिति नोक्तदोष इति वाच्यम्। तयोर्विरोधादित्यभिमानः। शीतोष्णस्पर्शवन्तौ इत्यस्यैकवाक्यतां मत्वाऽतिव्याप्तिमप्याह—किञ्चेति।

द्वितीयं निरस्यति—तद्भेदस्त्विति। तर्हि शुद्धधर्मा एव ते भवन्त्वित्याशङ्क्याह—आनन्दादीति। तदसिद्धेरानन्दत्वादेः शुद्धेऽपि मानाभावादेवासिद्धेः स्वरूपमेव प्रवृत्तिनिमित्तमिति वक्तव्यम्। ततश्च पर्यायतेति भावः। एवं लक्षणं निरस्यानुमानमप्ययुक्तमित्याह—आद्येति। प्रकृष्टप्रकाशादिवाक्यस्यापि संसर्गपरतायां वक्ष्यमाणत्वादिति भावः। नन्वपर्यायपदत्वं पक्षविशेषणतयोपादाय संसर्गागोचरप्रमाजनकत्वमात्रं निर्विकल्पकजनके प्रसिद्धं तत्र साध्यते। ततश्च विशिष्टलक्षणसिद्धिरित्याशङ्क्य निर्विकल्पकमपि ममासम्मतमित्याह—प्रत्यक्षादिनेति। असिद्ध्यादिदोषानपि क्रमेणापादयति—असिद्धिश्चेत्यादिना। किं सत्यत्वादिकं जातिः उपाधिर्वा। आद्ये तस्या अलक्ष्येऽब्रह्मण्यावश्यकत्वेन ब्रह्मणो लक्षणत्वायोगात्। तद्बोधकवाक्ये लक्षणवाक्यत्वासिद्धिरित्याह—सत्यत्वेति। द्वितीये किं सत्यत्वादि तात्त्विकमता-

व्यपि तस्य तात्त्विकस्य धर्मिज्ञानाबाध्यस्य चासंभवात्। अतात्त्विकस्य व्यावहारिकस्य चानात्मन्यपि सत्त्वात्। विरुद्धं च असाधारणधर्मरूपलक्षणपरवाक्यत्वस्य सखण्डार्थत्वेनैव व्याप्तत्वात्। न च स्वरूपलक्षणस्यानतिरेकात् तत्परत्वमखण्डार्थत्वाविरोधि। तस्य लक्ष्यमात्रत्वे लक्षणभावायोगात्। अतिरेकेऽपि यावल्लक्ष्यभावित्वादिनैव स्वरूपलक्षणत्वोपपत्तेश्च। न च द्वारत्वेन लक्षणपरत्वं द्वारिणोऽखण्डत्वाविरोधि। वक्ष्यमाणन्यायेन लक्षणभावात्प्रागेव सामान्यतो ज्ञाते लक्ष्यस्वरूपमात्रे तस्य द्वारत्वायोगात्। सखण्डवनादिलक्षणवाक्ये व्यभिचारश्च। किं चन्द्रलक्षणं इत्यसाधारणधर्मप्रश्नोत्तरप्रकृष्टादिवाक्ये व्यभिचारश्च। न चाखण्डलक्षणवाक्यत्वं हेतुः। असिद्धेः। न च धर्मे पृष्टे स्वरूपमात्रं वक्तुमुचितम्। न च प्रश्नविशेष्यविशेष्यकत्वं उत्तरत्वे तन्त्रम्। किन्तु तन्मूलसंशयविरोधित्वम्, बाधश्च धर्मिज्ञानाधीनस्वप्रकारकसंशयादिनिवर्तकम् मोक्षहेतुं सप्रकारकज्ञानं प्रति साधनत्वेन वेदान्तविचारविधानान्यथानुपपत्त्या बलवत्या वेदान्तवाक्ये साध्याभावनिश्चयात्।

अखण्डार्थानुमाने सत्प्रतिपक्षोद्भावनम्

सत्प्रतिपक्षत्वं च (१) सत्यादिवाक्यतात्पर्यविषयः संसृष्टरूपः संसर्गरूपो वा

---

तात्त्विकं? आद्येऽसम्भवः द्वितीयेऽतिव्याप्तिरिति न लक्षणतेत्याह—अतात्त्विकस्येत्यादिना। अतात्त्विकमपि पृथिवीत्वादिवल्लक्षणमस्त्वित्यपि न वाच्यमित्यभिप्रत्योक्तम्—धर्मिज्ञाने ते।

ननु सत्यादिवाक्यं स्वरूपलक्षणपरं, स्वरूपलक्षणं च न लक्ष्याद्भिद्यते ततो नोक्तदोष इति नेत्याह—न च स्वरूपेति। लक्ष्यभिन्नस्यैव लक्ष्यधर्मत्वे कथं स्वरूपलक्षणतटस्थलक्षणभेद इत्यत्राऽऽह—अतिरेकेऽपीति।

अखण्डस्वरूपप्रतिपत्त्युपयोगितयैवासाधारणधर्मस्य लक्षणवाक्येनाभिधानं न वरुध्यत इत्याशङ्क्याह—न च द्वारत्वेनेति। पूर्वमेव धर्मिज्ञानाभावे संशयबुभुत्साद्यनुपपत्तिरिति वक्ष्यमाणो न्यायः। किं यथाश्रुत एव हेतुः उताखण्डत्वविशेषितः? आद्ये आह—सखण्डेति। द्वितीयं निरस्यति—न चेति। लक्षणप्रश्नोत्तरवाक्यमपि स्वरूपपरमेव। ततो न व्यभिचार इत्याशङ्क्याह—न च धर्म इति। ननु धर्मविशेष्यकप्रश्नस्य कथं धर्मिविशेष्यकमुत्तरं स्यात्, प्रश्नोत्तरयोरेकविशेष्यकत्वनियमात्। अतस्त्वन्मतेऽप्यनुचितमिति—तत्राह—न च प्रश्नेति। बाधश्चेति। ब्रह्मणि संशयादिविरोधिज्ञानाय वेदान्तविचारविधानात् ब्रह्मज्ञानमात्रस्य च संशयाद्यनुकूलतया तदविरोधित्वात् सप्रकारकज्ञानविशेष एव तद्विरोधीति तज्जनकवेदान्तानां विचारविध्यनुपपत्त्या सखण्डार्थत्वनिश्चयात् बाध इत्यर्थः इति। पदार्थानां संसर्गो वाक्यार्थ इति मतेनाह—संसर्गरूपो वेति।

प्रमाणवाक्यतात्पर्यविषयत्वात् सम्मतवत्। (२) सत्यादिवाक्यं स्वतात्पर्यविषयज्ञानाबाध्यसंसर्गपरं स्वकरणकमितिविषयपदार्थनिरूप्यसंसर्गपरं वा प्रमाणवाक्यत्वात् अग्निहोत्रादिवाक्यवत्। विषं भुङ्क्ष्वेत्यादौ वाच्यार्थसंसर्गपरत्वाभावेपि उक्तसाध्यसद्भावात् न व्यभिचारः। खं छिद्रं कोकिलः पिकः इत्यादावप्यभिन्नार्थत्वे सामानाधिकरण्यायोगात्। छिद्रकोकिलादीनां खपिकादिशब्दवाच्यत्वसंसर्गपरत्वात् न तत्रापि व्यभिचारः। (३) वेदान्तजन्यप्रमा सप्रकारा, विचारजन्यत्वात् संशयविरोधित्वाच्च कर्मकाण्डप्रमावत्। (४) वेदान्तजन्या प्रमा ब्रह्मनिष्ठप्रकारविषया ब्रह्मधर्मिकसंशयविरोधित्वात्। ब्रह्मविचारजन्यत्वाच्च। यदेवं तदेवं यथा कर्मकाण्डविचारजन्यनिश्चयः इत्यादिना प्रतिरोधात्। दृष्टान्तस्य साध्यवैकल्यं च। तथाहि—

अखण्डार्थत्वे विकल्पाः

प्रकृष्टवाक्यस्याखण्डार्थत्वं न तावत् मुख्यवृत्त्या। लक्षणापि न तावत् गङ्गायां घोष इत्यादाविवाऽनुपपत्त्या चन्द्रादौ प्रकृष्टेन द्रव्यरूपेण गुणरूपेण वा प्रकाशेन सवन्धसत्त्वात्। नापि यष्टीः प्रवेशयेत्यादाविव तात्पर्यानुपपत्त्या कश्चन्द्र इति स्वरूपमात्रस्य पृष्टत्वादिति वाच्यम्। अस्ति कश्चिच्चन्द्रशब्दार्थः इत्यज्ञाने

---

वाक्यमपि पक्षीकृत्याह—सत्यादीति। मिथ्यासंसर्गपरत्वेनार्थान्तरवारणाय स्वतात्पर्येत्यादि। तथा च वेदान्ततात्पर्यविषयब्रह्मज्ञानाबाध्यत्वे संसर्गस्य सत्यत्वं सिध्यतीति भावः। साध्यान्तरमाह—स्वकरणकेति। स्वशब्दः समभिव्याहृतपरः। स्वकरणिका या मितिः तद्विषयो यः पदार्थः, तन्निरूप्यो यः संसर्गः तत्परमित्यर्थः। मितिविषयेति विशेषणकृत्यमाह—विषमिति। भेदभ्रमादिनिरासाय प्रयुक्तपर्यायानेकपदात्मकवाक्ये व्यभिचार इत्याशङ्याह—खं छिद्रमिति। फलपक्षकानुमानमप्याह—वेदान्तजन्येत्यादि।

न च विचारस्य पुरुषापराधनिवृत्तिमात्रहेतुत्वाङ्गीकारात् वेदान्तजन्यप्रमाया न तज्जन्यत्वमिति वाच्यम्, तस्य प्रतिबन्धकनिवृत्तिद्वारा प्रमायामपि हेतुत्वादिति भावः। सामान्यव्याप्तिमभिप्रेत्याह—यदेवमिति। प्रकृष्टप्रकाशवदिति दृष्टान्तोऽप्यसमञ्जस इत्याह—दृष्टान्तस्येति। किमेतस्य मुख्यया वृत्त्याऽखण्डार्थत्वं लक्षणया वा? नाद्यः मुख्यार्थस्य विशिष्टरूपत्वादित्याह—प्रकृष्टवाक्यस्येति। द्वितीयेऽपि किं मुख्यार्थान्वयानुपपत्त्या लक्षणाप्रवृत्तिः। तात्पर्यानुपपत्त्या वा? नोभयथापीति क्रमेणाह—लक्षणाऽपीत्यादिना। कश्चन्द्र इति। किं चन्द्रस्वरूपमात्रं पृच्छ्यते, असङ्कीर्णस्वरूपेण वा? आद्ये तस्य ज्ञातत्वात् न तद्विषयः प्रश्न इत्यभिप्रेत्य पूर्वं तज्ज्ञानमावश्यकमित्याह—अस्ति कश्चिदित्यादिना। प्रातिपदिकत्वानिश्चयेनेति। अर्थवदधातु

तत्र धर्मिज्ञानसाध्यायाः बुभुत्सायाः संशयस्य चानुपपत्तेः । चन्द्रपदस्य प्रातिपदिकत्वानिश्चयेन सुब्विभक्तिप्रयोगायोगात् ।

चन्द्र इत्यनूद्य स कः इतिप्रश्नायोगाच्च । न ह्यज्ञातमनुवादार्हम् । असङ्कीर्णचन्द्रस्वरूपं न ज्ञातमिति चेत् । न । चन्द्रस्वरूपद्वयाभावात् । तदेवासङ्कीर्णस्वरूपत्वेन न ज्ञातमिति चेत् न असङ्कीर्णत्वस्य व्यावृत्तिव्यावर्तकवैशिष्टचयोरन्यतररूपत्वेन प्रश्नस्य विशिष्टपरत्वापातात् । तस्माच्चन्द्रस्येतरस्मात् भेदक एव धर्मः पृष्ट इति न तद्वाक्यस्याखण्डार्थत्वम् । एवं प्रतिवचनस्य प्रकृष्टत्वादिविशिष्टतात्पर्याभावे यः कश्चिच्चन्द्र इत्येव बोधनात् ।

अतात्पर्यविषयस्य च प्रतीतस्याव्यावर्तकत्वात् वस्तुतो यस्य कस्यचित् चन्द्रत्वं स्यात् तात्पर्यविषये अखण्डे अयं चन्द्र इति लक्षणलक्ष्यरूपोद्देश्यविधेयादिविभागाभावेन तात्पर्यतो यत्किञ्चिदित्येव बोधनात् तेन चन्द्रबुभुत्सानिवृत्त्यभावात् । कश्चन्द्र इति प्रश्नोत्तरं च न स्यात् । प्रकृष्टादिपदवैयर्थ्यं च स्यात् ।

अखण्डार्थत्वेऽनुपपत्तयः

एवं च गामानयेत्यादौ गोत्वस्यानयनेनेव प्रकृष्टत्वादेः विधेयेन चन्द्रप्रातिपदिकार्थेनानन्वयेऽपि उद्देश्यतावच्छेदकत्वेन विवक्षितत्वात् तद्वदेव वैशिष्टचार्थत्वं दुर्वारम् । अस्ति च पृथिवीत्यादौ पृथिवीत्वस्य विधेयेन पृथिवीशब्दार्थत्वेनान्वय

---

रित्यर्थवत एव प्रातिपदिकसंज्ञाविधानात् चन्द्रपदस्य अर्थवत्त्वाज्ञाने प्रातिपदिकत्वाज्ञानात् तदधीनसुब्विभक्तिप्रयोगायोग इत्यर्थः । द्वितीयमुद्भावयति—असंकीर्णेति । किं वस्तुतोऽसङ्कीर्णं रूपं न ज्ञातं उत तत्त्वेन ? नाद्य इत्याह—न चन्द्र इति । द्वितीयमुद्भावयति—तदेवेति । अस्मिन् पक्षे अज्ञातासंकीर्णत्वस्यैव प्रश्नगोचरतया स्वरूपमात्रस्य पृष्टत्वासिद्धिरित्याह—न सङ्कीर्णत्वस्येति । एवं प्रश्नो विशिष्टविषय इत्युक्त्वा प्रतिवचनमपि तथेत्याह—एवमिति । प्रकृष्टादिवाक्यस्य व्यावर्तकधर्मवैशिष्ट्यपरत्वाभावे तस्य तज्जन्यप्रमित्यगोचरस्य चन्द्रत्वाश्रयव्यावर्तकत्वायोगात् यस्य कस्यचित् चन्द्रत्वमिति पूर्वावस्थातो न विशेषः स्यादित्यर्थः ।

ननु अखण्डस्वरूपविशेषे तत्परेण लक्षणवाक्येन निर्धारिते अर्थात् तस्येतरव्यावृत्तिसिद्धिरिति नेत्याह—अतात्पर्यविषयस्येति । उद्देश्यविधेयविभागाभावः उद्देश्यवाचकपदवैयर्थ्यं चेत्याह—प्रकृष्टादीति । तव मतेऽपि प्रकृष्टादिपदार्थस्य प्रकृष्टत्वादेः चन्द्रप्रातिपदिकार्थेनोद्देश्यतयाऽनन्वयात् तद्वैयर्थ्यमित्याशङ्क्याह—एवं चेति । क्वचिद्विधेयेनाप्यन्वयोऽस्तीत्याह—अस्ति चेति । पृथिवीत्वस्य कथं पृथिवीशब्दार्था-

नहि पृथिवीत्वं पृथिवीप्रातिपदिकार्थः। सहप्रयोगस्तु पृथिवीशब्दस्य तच्छब्देन व्यवहर्तव्यत्वपरत्वात्।

प्रश्नोत्तरे विशिष्टविषये

तस्मात् धर्मिणश्चन्द्रस्य सामान्यतो नक्षत्रादिव्यावर्तकस्य स्वव्यावृत्तिरूपधर्मस्य च घटादौ प्रागेव ज्ञातत्वात् विशिष्टविषये एव प्रश्नोत्तरे। व्यावृत्तिवैशिष्ट्ये साक्षाद्बुभुत्सितेपि विविच्य इदमस्माद्व्यावृत्तमिति जन्मशतेनापि दुर्वचत्वात्। धूमे कथितेऽग्निमिव व्यावर्तके उक्ते व्यावृत्तिं ज्ञास्यतीति भावेन व्यावर्तकवैशिष्ट्यमेव तात्पर्यतः प्रतिपादयति। नहि अग्निबोधार्थस्य धूमोऽस्तीति वाक्यस्य न धूमे तात्पर्यम्। न वा यागाक्षेपकस्याग्नेयादिवाक्यस्य न द्रव्यदेवतासंबन्धे।

यदि तु पृष्टैव व्यावृत्तिः प्रतियोगिनामानन्त्यात् साक्षात् प्रष्टुं वक्तुं वाऽशक्येति ज्ञात्वा कश्चन्द्र इत्यनया वचोभङ्ग्या कैर्विशेषणैर्विशिष्ट इति पृष्टं तदा सुतरां प्रश्नोत्तरे व्यावर्तकवैशिष्ट्यपरे इति न क्वाप्यखण्डार्थत्वम्। एतेन प्रश्ने धर्मवाचिपदं नेति प्रत्युक्तम्। तथापि चन्द्रधर्मस्यैव लक्षणीयत्वाच्च। प्रातिपदिकार्थस्य ज्ञातत्वेन तत्र बुभुत्साऽयोगात्। यद्वा लक्षणवाक्यमनुमानत्वेन आप्तवाक्यत्वेन वा चन्द्रव्यवहारकर्तव्यतावैशिष्ट्यपरमस्तु चन्द्रस्वरूपस्य प्रत्यक्षेण

---

त्मकता विधेयता स्यात् तस्यातदर्थत्वादित्यत आह—नहीति। तर्हि पृथिवीत्वपदेनैव तस्योपात्तत्वात् पृथिवीपदप्रयोगोऽनर्थक इत्याशङ्क्याह—सहेति।

ननु व्यावर्तकधर्मादिज्ञानं चेत् तत्प्रश्नायोगः अज्ञातत्वे धर्मिज्ञानाभावात् तद्बुभुत्सापूर्वकप्रश्नासंभव इत्याशङ्कां निराकुर्वन्नुपसंहरति—तस्मादिति।

चन्द्रादावितरव्यावृत्तिवैशिष्ट्यस्यैव बुभुत्सितत्वात् तदेव प्रतिपाद्यं न व्यावर्तकवैशिष्ट्यं अत आह—व्यावृत्तिवैशिष्ट्य इति। व्यावृत्तिप्रतियोगिनामनन्तत्वात् विशिष्य तन्मात्रं दुर्वचमित्यर्थः। तर्हि अजिज्ञासितविषयत्वमुत्तरस्येत्याशङ्क्याह—धूम इति। व्यावृत्तिरभिप्रेता चेत् कथं व्यावर्तकतात्पर्यमित्याशङ्क्याह—नह्यग्निबोधेति। प्रश्नस्य व्यावृत्तिविषयत्वमङ्गीकृत्याप्युत्तरस्य व्यावर्तकधर्मविषयत्वमुक्तम् विचार्यमाणे प्रश्नोऽपि व्यावर्तकविषय इत्युत्तरमपि तद्विषयमित्याह—यदि त्विति। कश्चन्द्र इति प्रश्नवाक्ये व्यावर्तकधर्माभिधायिपदाभावान्न तद्विषयता तस्येत्याशङ्क्याह—एतेनेति। चन्द्रस्वरूपस्य पूर्वमेव ज्ञातत्वे तत्र प्रकृष्टप्रकाशादिवैशिष्ट्यस्य च प्रत्यक्षेणैव ज्ञातत्वात् प्रश्नोत्तरयोः तद्विषयत्वायोगमाशङ्क्यार्थान्तरमाह—यद्वेति। यथाश्रुति चन्द्रस्वरूपपरत्वे को दोष इति विवक्षायामाह—चन्द्रस्वरूपस्येति। ननु चन्द्रविशिष्टव्यवहारं यदि प्रागेव जानाति तदा लक्षणवाक्यरूपानुमानादि निरर्थकं, न जानाति चेत् लक्षणवाक्यादपि तस्य विषयविशेषे कर्तव्यतां कथमधिगच्छेत् इति तत्राह—चन्द्रव्यवहारेति।

ज्ञातत्वात्। चन्द्रव्यवहारशब्देन चन्द्रशब्दविशेषितो व्यवहारो विवक्ष्यते ननु पदार्थविशेषितः। तस्मात् साध्यवैकल्यं तस्य दुष्परिहरम्।

द्वितीयानुमाननिरासः

एतेन द्वितीयमप्यनुमानं निरस्तम्। प्रकृष्टादिवाक्यवदुक्तरीत्या सत्यादिवाक्येऽपि बुभुत्साद्यनुपपत्त्या ब्रह्मस्वरूपमात्रप्रश्नोत्तरस्यासिद्धेः। इह कश्चन्द्र इतिवत् क्लृप्तस्य प्रश्नस्याभावात्। कल्प्यस्य च क्लृप्तोत्तरानुसारेण धर्मविषयकस्यैव कल्प्यत्वात्। कतम आत्मा कतर आत्मेत्यत्र त्वंपदार्थप्रश्ने 'वा बहूनां जातिपरिप्रश्ने डतमच्" । किं यत्तदोर्निर्धारणे द्वयोरेकस्य डतरच् इति सूत्राभ्यां जात्याद्यर्थकतमादिशब्दप्रयोगेण तत्प्रतिवचने योऽयं विज्ञानमयः इत्यादौ पक्षत्वेन स्वदभिमतहेतोरसिद्धेश्च। सर्वस्याप्युत्तरस्य प्रश्नधर्मिनिष्ठनिर्धारितैकप्रकारत्वात्। विरुद्धत्वाच्च। अन्यथा उत्तरमेव न स्यात् प्रश्नाधिकविषयत्वात् उत्तरस्य। किं करोति किमानेयमितिप्रश्नोत्तरेषु अध्ययनं करोति गामानयेत्यादिषु व्यभिचाराच्चेति।

नवीनपूर्वपक्षसमाधानम्

अत्रोच्यते। 'स्वपदोपस्थापितसंसर्गागोचरप्रमितिजनकत्वमखण्डार्थत्वम्। संयोगादिलक्षणवाक्यमपि एवंविधमेवेति नाव्याप्तिः। विषंभुङ्क्ष्वेत्यादिवाक्यमपि स्वपदस्मारितपदार्थसंसर्गगोचरप्रमितिजनकमेव लक्षणया। तयोरेवान्वय-

---

तन्मात्रप्रश्नोत्तरत्वादिति हेतोरप्यसिद्ध्यादिदोषवत्त्वादाभासतेत्याह—एतेनेति। बुभुत्साद्यनुपपत्त्येति बुभुत्सादेः धर्मिधीपुरस्सरत्वात् तन्मात्रस्य ज्ञातत्वे न तद्विषयत्वं प्रश्नादेरित्यर्थः।

सत्यादिवाक्यात् प्राक् ब्रह्मप्रश्नाश्रवणात् तस्य प्रश्नोत्तरत्वं च नेत्याह—इहेति। ब्रह्मलक्षणश्रवणादेव तन्मात्रप्रश्नोऽपि कल्प्यत इत्याशङ्क्याह—कल्प्यस्य चेति। कतम आत्मेत्यादिप्रश्नस्य स्वपदार्थस्वरूपविषयस्य श्रवणात् तदुत्तरवाक्यमपि तन्मात्रविषयमित्याशङ्क्याह—कतम इति। विरुद्धत्वादिकमप्याह—सर्वस्येत्यादिना। पूर्वोक्तबाधसत्प्रतिपक्षौ अत्रापि तुल्यौ इति भावः। लक्षणे दोषाभावं वक्तुं तत्स्वरूपं तावदाह—स्वपदेति। स्वस्य वाक्यस्यावयवभूतं यत्पदं तेनोपस्थापितः स्मारितो योऽर्थः तन्निरूपितो यस्संसर्गः तदगोचरा या प्रमा तज्जननयोग्यत्वमित्यर्थः। शुकाद्युदीरितलक्षणवाक्येऽव्याप्तिवारणाय योग्यत्वमित्युक्तम्। तच्च लक्षणवाक्यत्वादिना द्रष्टव्यम्। गामानयेत्यादिवाक्येऽतिव्याप्तिवारणाय-स्वपदेत्यादि। परोक्ताव्याप्तिमपवदति—संयोगादीति। तत्रापि प्राप्त्यादिपदैः संयोगप्रातिपदिकार्थस्यैव लक्ष्याणत्वात् तदवयवपदार्थसंसर्गप्रमाजनकता नेत्यर्थः। उपस्थापितेति विशेषणकृत्यमाह—विषमिति। तयोरेवेति ! विषंभु-

प्रतियोग्युपस्थापकत्वात् । अन्यथा तत्र विभक्त्यर्थान्वयानुपपत्तेः । विभक्तेः प्रकृत्यर्थान्वितस्वार्थबोधकत्वात् । शीतोष्णस्पर्शवन्तौ पयः पावकौ इत्येतदपि पयःपावकयोः पृथक् लक्षणद्वयपरमिति तदपि लक्ष्यमिति नातिव्याप्तिः । नाप्यसंभवः ।

लौकिकवाक्येऽखण्डार्थसाधनम्

तथाहि—अस्ति हि चन्द्रं न जानामीत्यज्ञानानुभवात्तस्मिन्नज्ञानम्, अस्ति च कश्चन्द्र इति तत्स्वरूपमात्रनिष्ठः प्रश्नः अत उत्तरमपि तत्समानार्थमिति अखण्डार्थम् । चन्द्रस्य ज्ञातत्वान्न तद्गोचरौ ताविति चेत् तर्हि व्यावर्तकस्यापि तस्मिन्निश्चितत्वात् तयोर्निर्विषयतापत्तिः । चन्द्रनिष्ठत्वाज्ञानं च तस्य चन्द्रपदार्थाज्ञानं विना न संभवति । अत एवाचन्द्रव्यावृत्तिविषयौ ताविति प्रत्युक्तम् । चन्द्रोऽचन्द्राद्व्यावृत्त इति सामान्येन तस्या अपि ज्ञातत्वात् । प्रकृष्टप्रकाशोऽचन्द्राद्व्यावृत्त इति धीर्नास्तीति चेन्न, तस्यापि प्रकृष्टप्रकाशे चन्द्रत्वाज्ञानप्रयुक्तत्वात् । प्रकृष्टप्रकाशश्चन्द्र इति ज्ञाने हि सति प्रकृष्टप्रकाशो अप्रकृष्टप्रकाशो न भवतीति धीरिव अचन्द्रो न भवतीति धीरपि भवत्येव ।

अस्तु तर्हि वाच्यत्वविषयौ ताविति चेत् न, तयोरपि प्रकृष्टप्रकाशे चन्द्रत्वाज्ञानं विनाऽनुपपत्तेः । तत्र तन्निश्चये हि यथा शुक्ले घटगुणे अयं शुक्ल-

---

क्वेति पदयोरित्यर्थः । वाक्यगम्यान्वयप्रतियोगिनोः पदाभ्यामनुपस्थितौ बाधकमाह—अन्यथेति । विषवाक्येपि सुप्तिङ्विभक्त्योः लक्षणाभावात् तयोश्च प्रकृत्युपस्थापितार्थान्वितस्वार्थबोधकतानियमात् तदर्थं संसर्गिणः तत्प्रकृत्युपस्थापितत्वमास्थेयमित्यर्थः । शीतोष्णस्पर्शवन्तावित्यत्रापि लक्षणद्वयपरतया वाक्यभेदान्नातिव्याप्तिरित्याह—शीतेति । यदुक्तं प्रकृष्टादिवाक्यस्यापि संसृष्टार्थत्वादसंभव इति तत्राह—नापीति । चन्द्रस्य प्रत्यक्षेणावगमात् तत्राज्ञानप्रश्नयोरयोग इति शङ्कते—चन्द्रस्येति । तर्हि किं तयोः प्रकृष्टप्रकाशकत्ववैशिष्ट्यं विषयः उताचन्द्रव्यावृत्तिवैशिष्ट्यं, चन्द्रपदवाच्यत्ववैशिष्ट्यं वा ? नाद्यः प्रकृष्टप्रकाशत्ववैशिष्ट्यस्य व्यक्तिविशेषे प्रत्यक्षेणैवावगमात् ततश्चन्द्रत्वविषयत्वमेव तयोरित्याह—तर्हीति । द्वितीयं निरस्यति—अत एवेति । किञ्च चन्द्रोऽचन्द्राद्व्यावृत्त इत्याकारेणाज्ञातत्वं, किं वा प्रकृष्टप्रकाशोऽचन्द्राद्व्यावृत्त इत्याकारेण ?, नाद्यः चन्द्रपदार्थाज्ञानाभावे तदयोगादित्यभिप्रेत्याह—चन्द्रोऽचन्द्रादिति ।

द्वितीयमुत्थाप्य निरस्यति—प्रकृष्टप्रकाश इत्यादिना । तस्य चन्द्रत्वाज्ञानप्रयुक्तत्वं व्यतिरेकमुखेनोपपादयति—प्रकृष्टप्रकाशश्चन्द्र इति । प्रकृष्टप्रकाशे चन्द्रत्वाज्ञानाभावे प्रकृष्टप्रकाशश्चन्द्र इति ज्ञानं परेणाभ्युपेयमेव । तथा च तस्याचन्द्राद्व्यावृत्तिरप्यनुभूयेतेत्यर्थः । तर्हि तृतीयकल्पोऽस्त्विति शङ्कते—अस्त्विति । चन्द्रपदवाच्यत्वविषययोरप्यज्ञानप्रश्नयोः चन्द्रप्रकाशे चन्द्रत्वाज्ञानं विनाऽयोगात् तदेव प्रश्नविषय इत्याह—न तयोरपीति । अन्यथोपपत्तिं निरस्यति—तत्र तन्निश्चये हीत्यादिना । घटगत-

शब्दवाच्य इत्याप्तवाक्यान्निश्चये पटशौक्ल्ये न तद्वाच्यत्वसंशयः। [एवं चन्द्रत्वसंज्ञिता काचिज्जातिः तदाश्रयश्चन्द्रपदवाच्य इति निश्चये सति प्रकृष्टप्रकाशे चन्द्रत्वनिर्णये तत्संशयो न स्यात्। तन्निष्ठे धर्मे वाच्यत्ववैशिष्ट्यनिश्चयस्योभयत्र तुल्यत्वात्।

ननु प्रकृष्टप्रकाशतद्धर्मवृत्तित्वेन चन्द्रपदवाच्यत्वं न ज्ञातमिति चेत् तर्हि पटगुणधर्मवृत्तित्वेन प्राक्तस्याप्यनवगमात् तत्रापि संशयः स्यात्। पटगुणवृत्तिजातौ शुक्लपदवाच्यत्वविशिष्टजात्यभेदावगमात्तत्र न तत्संशय इति चेत्। तत्र किं पटगुणे तद्विशिष्टत्वनिश्चयप्रयुक्तः तस्यास्तदभेदावगमः उतान्यप्रयुक्तः? आद्ये प्रकृतेऽपि तदभेदावगमः स्यात्। तव मते चन्द्रत्वस्य व्यक्तिविशेषे निश्चितत्वात्। न द्वितीयः। चन्द्रत्वमेकमितिनिश्चितत्वेन तद्भेदाज्ञानादेरपि तुल्यत्वात्।

नवीनशंकानिरासः

यत्तु तस्मिन् धर्मे चन्द्रत्वसंज्ञित्वं न जानामीति तन्न। तत्संज्ञित्वं हि तद्वाच्यत्वं, तच्च पटगुणनिष्ठेऽपि शुक्लत्वे स्वरूपेणैवात्रापि ज्ञातमेव। अत एव व्यक्तिविशेषे चन्द्रत्वपदवाच्यजातिवैशिष्ट्यज्ञानं न सत्तानिश्चयरूपमिति प्रत्युक्तम्। शुक्लः पट इति ज्ञानवत् तस्यापि तन्नियमात्। अङ्गुलिनिर्देशेन

---

शुक्लगुणे अयं शुक्लपदवाच्य इत्याप्तवाक्यात् तद्वाच्यत्वनिश्चयेऽपि पटगुणे न तत्संशयो जायते। तत्कस्य हेतोः? तत्स्वरूपस्य तत्र निर्धारितत्वात्। वस्तुतो वाक्योत्थज्ञानविषयत्वाच्च। एवं प्रकृष्टप्रकाशे चन्द्रत्वं निर्धारितं चेत् चन्द्रपदवाच्या काचिज्जातिरित्याप्तवाक्योत्थज्ञानस्य वस्तुतस्तद्विषयत्वात् तत्र तद्वाच्यत्वसंशयो न स्यात्। न च निश्चिते दोषवलात् तत्र संशय इति वाच्यम् नियमेनोपदेशनिवर्त्यस्य तस्य तदभावातिरिक्तदोषाप्रयोज्यत्वात् उपदेशविशेषस्य च वाच्यत्वज्ञान एवोपयोगे तज्ज्ञानसामग्रयाः पटशौक्ल्य इव प्रागेव संभवात् तत्संशयो न स्यादित्यर्थः।

वस्तुतः प्रकृष्टप्रकाशवृत्तिधर्मे चन्द्रपदच्यत्वज्ञानेऽपि तद्वृत्तित्वेन तदज्ञानात् सन्दिह्यत इति शङ्कते—नन्विति। तर्हि पटशौल्येपि तदज्ञानात् सन्देहः स्यादित्याह—तर्हीति। घटगुणगतजातिविशेषे शुक्लपदवाच्यत्ववैशिष्ट्यावगमात् तदभेदेनावगतपटगुणगत शुक्लत्वजातौ न तत्संशय इति शङ्कते—पटगुणेति। पटगुणगतशुक्लत्वजातेः तद्वाच्यत्वविशिष्टाभेदावगमः किं घटगुणे शुक्लत्वविशिष्टत्वनिश्चयप्रयुक्तः उत शुक्लत्वमेकमिति निश्चयप्रयुक्त इति विकल्पयति—तत्र किमिति। उभयथाऽपि परमते चन्द्रत्वे न वैशिष्ट्यसिद्धिरिति दूषयति—नाद्य इत्यादिना। प्रकृष्टप्रकाशवृत्तिधर्मे चन्द्रत्वसंज्ञाकत्वं न ज्ञातं प्रश्नगोचर इति अन्योक्तमनूद्य निरस्यति—यत्त्वित्यादिना। पटशौक्ल्यपदवाच्यत्ववैशिष्ट्यज्ञानं निश्चयरूपं चन्द्रे तु न तथेति संशयोपपत्तिरित्याशङ्क्याह—अतएवेति। प्रकृष्टप्रकाशे चन्द्रत्वज्ञानस्य सत्तानिश्चयरूपत्वे चन्द्रपदवाच्यत्ववैशिष्ट्यज्ञानस्यापि सत्तानिश्चयरूपत्वात् तद्विशिष्टचन्द्रत्ववैशिष्ट्यज्ञानमपि तथेति न वैषम्यमित्यभि-

**वाच्यप्रदर्शनमपि तत्स्वरूपनिर्धारण एव तर्कविधयोपयुज्यते। ननु व्यक्त्यन्तरे संशयाभावे। चन्द्रपदवाच्यचन्द्रत्वनिर्धारणं तु त्वया व्यक्तिविशेषे प्रत्यक्षरूपमभ्युपेयते। तस्मात्तत्र शुक्लत्वे उपदेशसहकृतप्रत्यक्षादज्ञाननिवृत्तिरत्र नेत्ययमेव विशेषः।**

**नन्वेवं एतेषु कश्चन्द्र इत्युपदेशसहकृतप्रत्यक्षादपि तत्राज्ञाननिवृत्तिः स्यादिति चेत्। न तादृशोपदेशस्य प्रत्यक्षव्यक्तिविशेषे तत्सत्तानिश्चायकतायामप्रयोजकत्वात्। किञ्च यदि प्रकृष्टप्रकाशे सत्तानिश्चयरूपं चन्द्रत्वप्रकारकप्रत्यक्षमस्ति तर्हि यत् त्वया चन्द्रत्वप्रकारकतया प्रत्यक्षेणं विषयीक्रियते तत् चन्द्रपदवाच्यमिति ज्ञानात् प्रकृष्टप्रकाशे संशयो निवर्तेत। अपि चैवं चन्द्रत्वाश्रयश्चन्द्रपदवाच्य इति ज्ञानानन्तरं चन्द्रत्वं कश्चिद्धर्मः स च प्रकृष्टप्रकाशे वर्तत इति उपदेशात् तव तत्संशयनिवृत्तिर्न स्यात् तस्य प्रत्यक्षादधिकविषयत्वाभावात् तेनापि प्रकृष्टप्रकाशनिष्ठे धर्मे चन्द्रपदवाच्यत्वाविषयीकरणात्। प्रत्यक्षस्याप्यखण्डधर्म-**

---

प्रेत्याह—शुक्ल इति। ननु शुक्लादौ अङ्गुलिनिर्देशपुरस्सरं वाच्यत्वग्रहात् व्यक्त्यन्तरेऽपि न संशयः। चन्द्रत्वे तु न तथेत्याशङ्क्याह—अङ्गुलीति। शुक्लत्व इव चन्द्रत्वेऽप्यवगतेः तुल्यत्वात् कथमत्र संशयादीत्याशङ्क्याह—तस्मादिति। चन्द्रेऽपि प्रकारान्तरेण उपदेशसहकृतप्रत्यक्षसंभवात् तत एवाज्ञानादि निवर्तेतेति चोदयति—नन्विति। सामान्योपदेशस्यान्यथोपपत्तिशंकायाः तदर्थज्ञानस्य व्यक्तिविशेषे चन्द्रत्वसत्तानवधारणात्मत्वात् ततो नाज्ञानादिनिरास इत्याह—न तादृशेति। चन्द्रपदार्थेऽज्ञानाभावे बाधकान्तरमाह—किञ्चेति। न च चन्द्रत्वपदस्यागृहीतसङ्गतिकत्वात् चन्द्रत्वप्रकारकतयेतिवाक्यमबोधकमिति वाच्यम्। वस्तुतश्चन्द्रत्वस्य तज्ज्ञानप्रकारत्वे तत्पदसमभिव्याहारादेव चन्द्रत्वपदाभिधेयस्यापि ज्ञातुं शक्यत्वात्।

नन्वथाप्ययं चन्द्रत्वप्रकारकज्ञानविषय इति विशिष्य न ज्ञायत इति चेत् नायं चन्द्रत्ववान् इति ज्ञाने सति तच्च विशिष्य न ज्ञायत इत्युक्तेरयोगात् तज्ज्ञानाभावे तु अज्ञातमेव चन्द्रत्वमिति न विवाद इति भावः। प्रत्यक्षेण व्यक्तिविशेषे चन्द्रत्वावगतावपि वाच्यत्वादिसंशयवत् शब्दतस्तदवगतावपि न संशयः स्यादित्याह—अपिचेति। ननु प्रत्यक्षेण प्रकृष्टप्रकाशगतचन्द्रपदवाच्यत्वं न ज्ञायते वाक्येन तु ज्ञायत इत्याशङ्क्य तत्र वाच्यत्ववाचकपदाभावात् तज्जन्यज्ञानमपि न तद्विषयमित्याह—तेनापीति। ननु त्वन्मतेऽपि येयं व्यक्तिः प्रकृष्टप्रकाशत्वेन नक्षत्रादिव्यावृत्तधर्मवत्त्वेनानुभूयते सैव चन्द्र इत्युपदेशात् कथं संशयनिवृत्तिः प्रत्यक्षाननुभूताविषयीकरणात् वाच्यबोधनस्य च त्वयैव निरस्तत्वात् इति चेन्न, अनुभूयमानव्यक्तावेव चन्द्रत्ववत् अभिन्नव्यक्तिस्वरूपविशेषस्य प्रत्यक्षानिश्चितस्य तेन प्रतिपादनात्। यद्यप्यस्मन्मते अभेदो व्यक्तिस्वरूपमेव तत्तु प्रत्यक्षेणापि विषयीक्रियते तथापि तज्ज्ञानं चन्द्रत्ववत् व्यक्त्यंशे न सत्तानिश्चयरूपं अनन्तरं तत्संशयादिदर्शनात्। उपदेशजन्यं तु तज्ज्ञानं सत्तानिश्चयादेवेत्यस्त्विति

चन्द्रत्वविशिष्टविषयत्वात्। तस्मात् पूर्वं चन्द्रस्वरूपमज्ञातं उपदेशसहकृत-प्रत्यक्षेण निर्णीयते इत्यावश्यकत्वात् चन्द्रपदार्थ एव प्रश्नविषय।

चन्द्रस्वरूपज्ञानार्थमुपदेशः

ननु यत्रानुगतप्रत्ययादपि जातिनिर्णयः तत्र किमर्थमुपदेश इति चेत् भ्रान्तोऽसि। नह्युपदेशेन काचिज्जातिरस्तीति निर्णीयते। किन्तु तस्याः स्वरूपं तच्चोपदेशात्पूर्वं प्रकृष्टप्रकाशेन ज्ञातं तेन ज्ञायते। अन्यथा तत्र पूर्वं तत्संशयस्येदानीं तन्निवृत्तेश्चायोगात्। जातौ च स्वरूपविशेषः परेणाप्यभ्युपेयः। कथमन्यथा प्रमेयवानयं घटोऽयमिति ज्ञानयोर्वैलक्षण्यं स्यात् प्रकारभेदाभावात् न च तत्र घटत्वतात्मना घटत्वं प्रतीयते। इतरत्र नेति वाच्यम्। तत्स्वरूपव्यतिरेकेण घटत्वताया अभावात् घटेतरावृत्तित्वघटितस्य तस्य पटादिव्यावृत्तघटस्वरूप-परिज्ञानाधीनज्ञानत्वेनान्योन्याश्रयात्। वैलक्षण्यानङ्गीकारे च तयोः कार्य-विशेषो न स्यात्। स्वरूपविशेषश्च दुर्निरूपोऽपि सहकारिबलात् क्वचिद्भाति

---

विशेषः। किञ्च वाच्यत्वबोधनपक्षे सर्वपदानां नानार्थत्वभ्रमदशायां गोत्वानधिकरण-स्यापि गोशब्दवाच्यत्ववत् चन्द्रत्वानधिकरणस्यापि चन्द्रपदवाच्यत्वं संभावयतः अयं-चन्द्रो न वेति संशयो न स्यात्। वाच्यत्वस्य नेन निश्चितत्वात्। चन्द्रत्ववैशिष्ट्य-निश्चयस्य त्वयैवाभ्युपेतत्वात्। अत एव चन्द्रत्वसमानाधिकरणचन्द्रपदवाच्यत्वविषयः संशय इति निरस्तम्।

एकस्मिन् प्रकृष्टप्रकाशे उभयोरपि निश्चये तदयोगात्। तथाचास्मदुक्तविधया चन्द्रस्वरूपाज्ञानमेव संशयप्रयोजकमित्यत्रापि तथैवेभिप्रेत्योपसंहरति—तस्मादिति। लक्षणवाक्यैः प्रकृष्टप्रकाशादौ चन्द्रत्वादिजातिर्निर्धार्यत इत्युक्तं, तन्न। जातिनिर्णयस्या-न्याय्यत्वात् न वाक्यापेक्षेति चोदयति—ननु यत्रेति। व्यक्त्यतिरिक्तजातिसद्भावमात्र-मनुगतप्रत्ययावसेयम् तद्विशेषरूपं तु उपदेशगम्यमित्याह—नहीति।

ननु जातौ गुणजात्यादेरभावात् को वा विशेषः यस्याज्ञानात् संशयादिरित्या-शङ्क्याह—जातौ चेति। जातौ विशेषो नाम न धर्मः। किन्तु यस्मिन्नवगते स्वस्येतर-व्यावृत्तताऽवगम्यते तदेव स्वरूपं तस्य विशेषः स चावश्यक इत्यर्थः। तदनङ्गीकारे बाधकमाह—कथमित्यादिना। अन्योन्याश्रयादिति। घटेतरावृत्तित्वे सति सकलघटवृत्तित्व-रूपघटत्वताज्ञानाभावे तद्विशिष्टघटत्वविशेष्यकोऽयंघट इति ज्ञानाभावः। एतदभावे च घटत्वस्येतरावृत्तित्वे सति एतद्वृत्तित्वरूपघटत्वताज्ञानाभावात् नैकमपि सिद्ध्येदि-त्यर्थः। प्रमेयवानयं घटोऽयमिति ज्ञानयोर्मास्तु वैषम्यमित्यत आह—वैलक्षण्येति। कार्य विशेषः संशयतन्निवृत्त्यादिः। चन्द्रत्वादावज्ञातस्वरूपविशेषोऽस्तीति चेत् ईदृशः सः इति शब्दान्तरेण वक्तव्यः स इत्याशङ्क्य इक्षुक्षीरगुडादिमाधुर्यवैषम्यवदनुभवसिद्धो न त्वभिधार्ह इत्यभिप्रेत्याह—स्वरूपविशेषश्चेति।

क्वचिन्नेति अनुभवसिद्धो निराकर्तुमशक्य एव। अतस्तदेव लक्षणेन ज्ञाप्यते।

किञ्च यदि वाच्यत्वजिज्ञासा तदा तस्य स्वरूपेण ज्ञातत्वात् चन्द्रपदप्रवृत्तिनिमित्तविषय एव प्रश्नो वक्तव्यः। तदा उत्तरमसङ्गतं, प्रकृष्टप्रकाशत्वस्य तदभावात्। अन्यथा सर्वत्राप्युपाधिरेव प्रवृत्तिनिमित्तमिति जातिर्न स्यात्। अत एव प्रकृष्टप्रकाशत्वातिरिक्तजातिरेव नेति निरस्तम्। तव मतेऽपि प्रकृष्टप्रकाशजनकतावच्छेदकत्वेन तस्यावश्यकत्वाच्च। न च प्रकृष्टप्रकाशपदेन चन्द्रत्वं लक्ष्यत इति वाच्यम्। प्रकृष्टप्रकाशसम्बन्धित्वेन तस्य पूर्वज्ञाने चन्द्रत्ववांश्चन्द्रपदवाच्य इति वाक्यादपि प्रकृष्टप्रकाशे तत्संशयनिवृत्तिप्रसङ्गात्। तस्यासाधारणरूपेण प्रकृष्टप्रकाशसंबन्धाज्ञाने च न ततः तल्लक्षणा। न च प्रकृष्टप्रकाश एव चन्द्रपदवाच्य इति सामर्थ्यान्निश्चीयते ततो लाघवादिना चन्द्रत्वप्रवृत्तिनिमित्तत्वं स्वयमेव ज्ञास्यतीति सर्वमुपपद्यत इति वाच्यम्। नानार्थत्वनिश्चयवतः तथा बोधासंभवात्। न च तस्य चन्द्रत्वसमानाधिकरणचन्द्रपदवाच्यत्वमेव तत्प्रतिपादयतीति वाच्यम्। तथात्वे लाघवावश्यकत्वाभ्यां चन्द्रत्वस्यैव वाक्यार्थत्वात्। सिद्धान्ते तु वाक्येन स्वरूपे ज्ञाते तस्य तत्पदवाच्यत्वमनुमानात् सिद्धयति।

---

एवं परमते प्रश्नानुपपत्तिमुक्त्वा उत्तरस्याप्यसामञ्जस्यमाह—किञ्चेति। न तावत् यथाश्रुते प्रकृष्टप्रकाशवैशिष्ट्यं प्रतिवचनप्रमेयं, तस्य प्रत्यक्षेणावगतत्वात्। नापि तद्विशिष्टस्य चन्द्रत्ववैशिष्ट्यमज्ञातं तत्प्रमेयमिति वाच्यम्। नागृहीतविशेषणान्यायेन लाघवेन च ज्ञातचन्द्रप्रातिपदिकार्थस्यैव तत्प्रमेयत्वापातात्। नापि चन्द्रपदवाच्यत्वं तत्प्रमेयं, तस्यापि चन्द्रपदवाच्यं किञ्चिदस्तीति सामान्यतोऽवगमात्। तत्प्रवृत्तिनिमित्तमेव प्रश्नविषयो वाच्यः। तथा च प्रकृष्टप्रकाशत्वं चन्द्रपदप्रवृत्तिनिमित्तमिति प्रतिवचनार्थः [इति]। तच्चायुक्तम्। उपाधेः सखण्डस्याखण्डशब्दालम्बनत्वायोगात्। इतरथा तस्यैवानुगतबुद्धयालम्बनत्वस्यापि संभवात् जातिशून्यं जगत् स्यात् इत्यर्थः। प्रकृष्टप्रकाशत्वमेव चन्द्रत्वं जातिः ततो नोक्तदोष इत्याशङ्क्याह—अतएवेति। तस्य सखण्डतयोपाधित्वादित्यर्थः। किञ्च प्रकृष्टप्रकाशस्य चन्द्रगतागन्तुकगुणविशेषत्वात् समवायितावच्छेदकतया तदतिरिक्तजातिरभ्युपेयेत्याह—न वेति। तर्हि प्रकृष्टादिपदेन चन्द्रत्वं लक्षणयोपादाय तस्य प्रवृत्तिनिमित्तता वाक्येन बोध्यत इत्याशङ्क्याह—न चेति। किं प्रकृष्टप्रकाशेन असाधारणसंबन्धवत्तया चन्द्रत्वज्ञानं उत न; आद्ये आह—प्रकृष्टेति। न च संबन्धग्रहात्प्राक् चन्द्रत्ववान् इति वाक्यमबोधकमिति वाच्यम्। पूर्वोक्तन्यायेन चन्द्रत्वे ज्ञाते चन्द्रत्वं नाम काचिज्जातिः इति वाक्यादेव तद्ग्रहसंभवादिति भावः। द्वितीये हेत्वभावान्न लक्षणेत्याह—तस्येति।

तर्हि चन्द्रपदवाच्यत्वस्याश्रयविशेषसंसर्ग एव तत्प्रतिपाद्य इत्याशङ्क्याह—

**नानार्थभ्रमश्रीपदेशान्तराद्व्यावर्तनीयः। न च चन्द्रपदवाच्यत्वस्याश्रयमात्रं तेन प्रतिपाद्यत इति वाच्यम्। तस्याजिज्ञासितत्वात्। न च तस्यैव जिज्ञासेतिवाच्यम्। अनुपयोगात्।**

पदवाच्यत्वाश्रयजिज्ञासापूर्वपक्षः

**ननु अस्ति कश्चिच्चन्द्र इत्यनेनैव चन्द्रत्वनिमित्तकत्वं वाच्यत्वस्यज्ञातं, तस्याश्रय एव परं जिज्ञासित इति चेत्। किं वाच्यत्वस्याश्रयः उत निमित्तस्य वा? नाद्यः चन्द्रत्वाश्रयस्य ज्ञातत्वात्। द्वितीये च चन्द्रपदार्थ एव जिज्ञास्य इति सदिष्टसिद्धिः। ननु प्रकृष्टप्रकाशत्वसामानाधिकरण्येन चन्द्रत्वनिमित्तकपदवाच्यत्वे ज्ञाते तत्र चन्द्रत्वमनुमातुं शक्यत इति चेत्। किमनेन बकबन्धनप्रयासेन। साक्षादेव तत्प्रतिपादनोपपत्तेः। तस्य तत्र त्वया प्रत्यक्षत्वाभ्युपगमाच्च।**

**न च प्रकृष्टप्रकाश एव चन्द्रपदवाच्य इति सामर्थ्यान्निश्चीयते। ततो लाघवादिना चन्द्रत्वप्रवृत्तिनिमित्तत्वं स्वयमेव ज्ञास्यतीति सर्वमुपपद्यत इति वाच्यम्। नानार्थत्वनिश्चयबलेः तथा बोधासंभवात्। न च तस्य चन्द्रत्वसमानाधिकरणचन्द्र-**

---

न च चन्द्रेति। अनुपयोगादिति। प्रवृत्तिनिमित्तज्ञानाभावेन तावन्मात्रेण व्यवहाराद्यसिद्धेरित्यर्थः। अन्यत एव प्रवृत्तिनिमित्तस्य ज्ञातत्वात् आश्रय एव जिज्ञासित इति शङ्कते—नन्वस्तीति। तच्छब्दार्थं विकल्पयन् दूषयति—किमित्यादिना। ज्ञातत्वादिति। अस्ति कश्चिच्चन्द्र इत्यादिनेत्यर्थः चन्द्रपदप्रवृत्तिनिमित्ताश्रयस्यैव चन्द्रप्रातिपदिकार्थत्वात् तस्यैव जिज्ञास्यत्वे उत्तरमपि तत्परमेवेत्यखण्डार्थतासिद्धिरित्याह—द्वितीये इति। प्रकृष्टप्रकाशत्वाधिकरणे च तिज्ञासितं न च तस्यवैयर्थ्यं प्रकृष्टप्रकाशे चन्द्रत्वानुमानार्थत्वादितिशङ्कते—ननु प्रकृष्टेति। प्रकृष्टप्रकाशे चन्द्रत्वाज्ञाने तस्यैव जिज्ञास्यत्वेन वाक्यप्रतिपाद्यत्वसंभवात् तल्लिङ्गे जिज्ञासादिकल्पनं व्यर्थमिति परिहरति—किमनेनेति। बकपरिग्रहणार्थं प्रवृत्तः कश्चित् सवितृकिरणसन्तप्ते तच्छिरसि नवनीतं प्रक्षिप्य तेन विकीनेन तन्नेत्रयोः पूर्णयोरन्धीभूतं जिघृक्षन्ति तस्य यथा नवनीतप्रक्षेपायासो वृथा तेन विनापि तदैव ग्रहीतुं शक्यत्वात् एवमत्रापीत्यर्थः। प्रकृष्टप्रकाशे चन्द्रत्वस्यानुमेयत्वमपि एवमतेत् स्यादित्याह—तस्येति।

ननु आप्तेन प्रकृष्टप्रकाशपदसमानाधिकरणचन्द्रपदप्रयोगसामर्थ्यात् प्रकृष्टप्रकाशत्वावच्छेदेन चन्द्रपदवाच्यता ज्ञायते। ततश्च प्रकृष्टप्रकाशत्वस्योपाधितया गुरुत्वात् तद्गतरूपादेश्चाननुगतत्वात् लाघवाच्च तद्गत चन्द्रत्वमेव तन्निमित्तमित्यवसीयते ततो न कोऽपि दोष इति तत्राह—न च प्रकृष्टेति। गवादिपदवत् चन्द्रपदमपि नानार्थमेवेति ज्ञाने यस्य प्रमात्वनिश्चयः तस्य प्रकृष्टप्रकाश एव चन्द्रपदवाच्य इति बोधो नोदेति अयोग्यताभ्रमस्य तत्प्रतिबन्धकत्वादित्याह—नानार्थत्वेति। नानार्थत्वभ्रम-

पदवाच्यत्वमेव तत्प्रतिपादयतीति वाच्यम्। तथात्वे लाघवावश्यकत्वाभ्यां चन्द्रत्वस्यैव वाक्यार्थत्वात्। सिद्धान्ते तु वाक्येन स्वरूपे ज्ञाते तस्य तत्पदवाच्यत्व-मनुमानात् सिध्यति नानार्थभ्रमोपदेशान्तराद्व्यावर्तनीयः।

प्रकृष्टादिवाक्याभिप्रायान्तरम्

ननु चन्द्रत्वं घटादिसाधारणमिति भ्रमवतः तद्वाक्यात्तत्स्वरूपसिद्धिरपि न स्यात्। एतस्माद्वाक्यादेव तस्य बाधे प्रकृतेऽपि किं न स्यादिति चेत् न, अन्यत्र तदभावनिश्चयदशायां तदनिश्चयदशायामेव वा तज्जिज्ञासासंभवात्। तस्य त्वयापि वक्तव्यत्वाच्च। यत्तु प्रकृष्टप्रका एव चन्द्रत्वावच्छिन्नः चन्द्रपदवाच्यता-श्रय इति प्रतिपाद्यते। न चैवं चन्द्रत्वस्यैव तदर्थत्वापत्तिः चन्द्रत्वावच्छिन्नवाच्य-ताया एव जिज्ञासितत्वादिति।

प्रकृतशंकासमाधिः

तत्र। किं चन्द्रत्वस्यावच्छेदकत्वं तदन्यतानतिरिक्तदेशकत्वं, तत्समानाधि-

---

वतोऽपि तदविरोधित्वेनैव प्रकृष्टप्रकाशे वाच्यताबोध इत्याशङ्क्य निरस्यति—न चेति। चन्द्रत्ववान् चन्द्रपदवाच्यः इत्यस्य सार्वजनीनत्वात् प्रकृष्टप्रकाशे चन्द्रत्वनिश्चये तत्र तद्वाच्यत्वाज्ञानायोगात् तत्र चन्द्रत्वाज्ञानमावश्यकमिति लाघवात् तदेव वाक्यार्थ इत्यर्थः। त्वन्मते चन्द्रप्रातिपदिकार्थानवोधने तस्य चन्द्रपदवाच्यत्वं कथं सिद्ध्येदिति शङ्कायामाह—सिद्धान्त इति।

प्रकृष्टादिपदैः लक्षणया चन्द्रप्रातिपदिकार्थे चन्द्रत्वे बोधिते चन्द्रपदमस्य वाचकं असति वृत्त्यन्तरे तत्र प्रयुक्तत्वात् यदेवं तदेवं यथाघटपदं इत्यनुमानादेव वाच्यत्वसिद्धिः। न च विशेषणासिद्धिः। उत्सर्गतः प्राप्तवृत्त्यन्तराभावस्यापवादकाभावादिति भावः कथं तर्हि नानार्थत्वभ्रमनिरास इत्याशङ्क्यानन्यथासिद्धकार्यान्तरानुपलम्भात् चन्द्रत्व-स्यैवायं वाचक इत्युपदेशाद्वा तन्निरास इत्यभिप्रेत्याह—नानार्थत्वेति। अप्रकृष्टप्रकाशेऽपि चन्द्रत्वभ्रमवतः कथं प्रकृष्टादिवाक्यं तद्बोधकमिति चोदयति—नन्विति।

अनेनैव वाक्येनान्यत्र चन्द्रत्वभ्रमस्य बाधात् व्यक्तिविशेष एव तत्सिद्धिरित्या-शङ्क्य तर्हि नानार्थत्वभ्रमस्याप्यनेनैव बाधात् व्यक्तिविशेषे तद्वाच्यत्वसिद्धिरिति न पूर्वोक्तदोष इत्याह—एतस्यादिति। घटादौ चन्द्रत्वनिश्चये कश्चन्द्र इति प्रश्नायोगात् तदभावदशायामेव प्रश्न इति प्रकृष्टप्रकाश एव तद्बोधो युक्त इत्याह—नान्यत्रेति। चन्द्रत्वस्य चन्द्रपदप्रवृत्तिनिमित्तत्वं कल्पयता त्वयाऽपि तस्य घटादिसाधारणत्वभ्रमा-भावोऽभ्युपेयः इतरथा तस्य प्रकृष्टप्रकाशमात्रे प्रतिपन्नवाच्यतानिमित्तत्वायोगा-दित्याह—तस्येति। नानार्थत्वभ्रमवतोऽपि चन्द्रत्वावच्छिन्नवाच्यता प्रकृष्टप्रकाश एवेति ज्ञातुं शक्यत्वात् स एव वाक्यार्थ इति चोद्यमनूद्य निरस्यति—यत्त्वित्यादिना। चन्द्रत्वाव-च्छिन्नवाच्यताया एवेति। चन्द्रत्वस्य स्वरूपेण ज्ञातत्वादिति भावः। अद्ये कल्पे चन्द्रत्वा-

करणत्वमात्रं वा ? नाद्यः, चन्द्रत्वानधिकरणमपि चन्द्रपदवाच्यमिति निश्चयदशायां तत्त्वेन जिज्ञासाया वाक्यादर्थस्य वाऽवगमायोगात्। अत एव न द्वितीयः। चन्द्रत्वसामानाधिकरण्यं चन्द्रपदवाच्यतायाः प्रकृष्टप्रकाश एवेति ज्ञानं तस्यापि भवतीति चेत्। सत्यम्। अत एव अज्ञातं चन्द्रत्वमेव तदर्थं इत्युच्यते। एतावता तस्य चन्द्रत्वप्रवृत्तिनिमित्तत्वासिद्धेश्च। तस्मान्न वाच्यत्वं वाक्यविषया प्रतिपाद्यते। तस्माच्चन्द्रपदवाच्यः सामान्यतोऽवगत एव जिज्ञासित इति।

बुभुत्सितस्य चन्द्रस्य प्रतिपादकमेव नः। वक्यं लक्षणयाऽन्यस्मात् सिद्ध्येत् तत्पदवाच्यता॥ लक्षणा च स्वसंबन्धितया ज्ञात एवेति नातिप्रसङ्गः। न चैवं यतो जिज्ञासा कथं तत एव तन्निवृत्तिरिति वाच्यम्। जिज्ञासा हि स्वविषयनिश्चयनिवर्त्या न तु स्वाविषयवैशिष्ट्यनिश्चयनिवर्त्या। भिन्नविषयत्वात्

---

न्यूनानतिरिक्तदेशा चन्द्रपदवाच्यता प्रकृष्टप्रकाश एवेति स्यात्। न च तद्युज्यते। वस्तुतश्चन्द्रत्वानधिकरणेऽपि चन्द्रपदवाच्यत्वभ्रमवतः प्रकृष्टप्रकाशे तादृशवाच्यताश्रयत्वेन जिज्ञासायोगाच्चन्द्रत्वस्य न्यूनवृत्तित्वनिश्चयेन तथाबोधायोगाच्चेत्याह—नाद्य इति। नानार्थत्वभ्रमादेव प्रकृष्टप्रकाशवृत्तिचन्द्रपदवाच्यताया एवान्यत्रापि सत्त्वनिश्चयेन चन्द्रत्वस्य तत्सामानाधिकरण्यमात्रेण प्रकृष्टप्रकाशे तन्निमित्तत्वं न सिद्ध्येदित्यभिप्रेत्याह—अत एवेति। नानार्थत्वभ्रमाविरोधेनार्थान्तरं शङ्कते—चन्द्रत्वेति। नानार्थत्वभ्रमवतो नोक्तबोधो भवतीत्येतदङ्गीकरोति—सत्यमिति। तर्हि स एव वाक्यार्थ इत्याशङ्क्याह—अत एवेति। चन्द्रत्वस्य प्रकृष्टप्रकाशे प्रागेव निर्णये तत्र तद्वाच्यत्वसामानाधिकरण्याज्ञानासंभवेन तस्य वाक्यप्रमेयत्वायोगादेवेत्यर्थः।

अन्यत्रापि वाच्यत्वस्यापि प्रवृत्तिनिमित्तत्वानिश्चयस्तुल्य इत्याह—एतावतेति। किञ्च प्रकृष्टादिपदैः वाच्यत्वसंसर्गो मुख्यवृत्त्या बोध्यते किं वा लक्षणया ? नाद्यः, तत्र तद्वाचकपदाभावात्। द्वितीये किं प्रकृष्टप्रकाशकपदेन वाच्यता लक्ष्यते चन्द्रपदेन वा ? उभयथापि किं मुख्यार्थसंबन्धितया चन्द्रपदवाच्यत्वज्ञानं न वा ? आद्ये तज्जिज्ञासा कथमिति वाक्यं व्यर्थम्। द्वितीये हेत्वभावान्न लक्षणाप्रवृत्तिरित्यादिदोषस्तु वज्रलेपायते। सिद्धान्ते तु त्वदुक्तमर्थं न जानामीत्यादौ ज्ञातेऽप्यज्ञानोपपादनात् जिज्ञासालक्षणादेः संभवात् न कोऽपि दोष इत्यभिप्रेत्योपसंहरति—तस्मान्न वाच्यत्वमिति। उपपादितमर्थं श्लोकेन संगृह्य दर्शयति—बुभुत्सितस्येति। अन्यस्मादनुमानादितः चन्द्रत्वानधिकरणेऽपि लक्षणासंभवात् कथं चन्द्रस्वरूपमेव सिद्ध्येदित्यत आह—लक्षणा चेति।

जिज्ञासायाः धर्मिज्ञानजन्यत्वात् तन्मात्रज्ञाननिवर्त्यत्वायोगात् स्वविषयादधिकविषयकज्ञाननिवर्त्यत्वं वक्तव्यम्। तथा च चन्द्रस्वरूपजिज्ञासानिवर्तकस्य प्रकृष्टादिवाक्यजन्यज्ञानस्य विशिष्टविषयत्वसिद्धिरित्याशङ्क्याह—न चैवमित्यादिना।

प्राथमिकचन्द्रज्ञानं च न तथा। तस्य चन्द्रत्वे सत्तानवधारणात्मत्वात्। उपदेशानन्तरभाविज्ञानं चाप्तोपदेशाऽनुपपत्त्यादिस्वरूपतर्कप्रतिसन्धानेन सत्तावधारणात्मकमिति तत् तन्निवर्तकम्। अत एव चन्द्र इत्येतावन्मात्रात् न तर्कोऽवतरति। न वा व्यक्तिविशेषोपस्थितिरिति प्रकृष्टप्रकाशप्रयोगः। विशेषश्च स्वरूपमेव।

पदार्थसंसर्गतात्पर्यान्नाखण्डार्थः—पू॰स॰

नन्वेवमपि संसर्गस्य प्रतिपाद्यत्वात् कथमखण्डार्थतेति। किं भ्रान्तोऽसि। न हि संसर्गागोचरप्रमाजनकत्वमात्रं अखण्डार्थत्वं, किन्तु पदोपस्थापितपदार्थसंसर्गागोचरप्रमितिजनकत्वमित्युक्तम्। तच्चात्राप्यस्त्येव। अतएवोक्तम्—शशङ्काभिधानाभिधेये हि पृष्टे तदेवोत्तरेणापि निर्णेयमत्रेति। न चैवं ब्रह्मण्यपि धर्मवैशिष्ट्यं वाक्यार्थः स्यादितिवाच्यम् उत्कर्षसमतापत्तेः। एकप्रातिपदिकार्थत्वमात्रे च प्रकृष्टप्रकाशादिवाक्यसाम्यं वेदान्तानां चैतन्यमात्रे तात्पर्यमस्मदाचार्यैर्निरूपितम्।

वस्तुतस्तु चन्द्रव्यक्तिरेव जिज्ञासिता वाक्यार्थः जातेरिव व्यक्तेरपि स्वरूपविशेषसत्त्वात्। जातिविशेषाश्रयप्रयोजकत्वेन तस्य वक्तव्यत्वात्। अविद्या-

---

यदप्युक्तं एवं सति प्रकृष्टप्रकाशपदवैयर्थ्यमिति तत्राह—अत एवेति। चन्द्रपदमात्रप्रयोगे व्यक्तिविशेषे चन्द्रत्वनिर्धारकतर्कानुदयात् तज्जन्यज्ञानं न सत्तावधारणमित्यर्थः। तावन्मात्रनक्षत्रसन्तमसादिव्यावृत्तस्वरूपविशेषोपस्थितिरपि नेत्याह—न वेति। व्यक्तौ व्यावर्तकधर्मातिरेकेण को वा विशेष इत्याशङ्क्य धर्मवत् स्वरूपस्यापि व्यावर्तकत्वात् स एव विशेष इत्याह—विशेषश्चेति। चन्द्रत्वविशिष्टमेव लक्षणवाक्यप्रमेयमिति कथं तस्याखण्डार्थतेति चोदयति—नन्विति। चन्द्रत्ववैशिष्ट्यस्यापि जिज्ञास्यत्वादिकमभ्युपेत्य पदार्थतावच्छिन्ननिरूपितसंसर्गतेति नाखण्डार्थत्वक्षतिरित्याह—न हीति। चन्द्रप्रातिपदिकार्थ एव पृष्टः प्रतिवचनेन बोध्यत इत्येतदन्यैरपि व्याख्यातमित्याह—अत एवेति।

तर्हि ब्रह्मप्रातिपदिकार्थस्यापि बृहत्त्वविशिष्टत्वरूपत्वात् तदेव सत्यादिवाक्यप्रमेयं स्यादित्याशङ्क्याप्रयोजकत्वेन व्याप्त्यभावात् अव्यापकधर्मापादनस्य उत्कर्षसमत्वान्नैतदित्याह—न चैवमित्यादिना। कथं तर्हि दृष्टान्तदार्ष्टान्तिकभाव इत्यत्राह—एकेति। पदार्थयोः संसर्गागोचरत्वमात्र इत्यर्थः। कथं तर्हि सत्यादिवाक्यार्थज्ञानस्य वैशिष्ट्यागोचरत्वसिद्धिरित्याशङ्क्य तस्य तत्तात्पर्यगोचरत्वादेवेत्यभिप्रेत्याह—वेदान्तानामिति।

अभ्युपगमं परित्यजति—वस्तुतस्त्विति। व्यक्तेर्ज्ञातत्वात् कथं तत्र जिज्ञासेत्याशङ्क्याह—जातेरिवेति। व्यक्तौ धर्मातिरिक्तस्वरूपविशेषानभ्युपगमे धर्माश्रयव्यवस्थानुपपत्तेः सोऽभ्युपेय इत्याह—जातिविशेषेति। किञ्च अविद्यातिरिक्तजाते-

त्मकजातेः स्वनो विशेषाभावेन तद्व्यक्तेरेव विशेषत्वात्। अतो व्यक्तिविशेषज्ञानं विना जातेस्तदसंभवात् तज्ज्ञाने चोपदेशान्तरं विनापि तज्ज्ञानसंभवात् व्यक्तिरेव जिज्ञास्यते। अत एव कश्चन्द्र इति जिज्ञासा नतु काऽस्य जातिरिति। तात्पर्यानुपपत्तिश्च लक्षणाबीजम्। न चैतावता तात्पर्यज्ञानस्य वाक्यार्थज्ञानहेतुता। शक्तिग्राहकप्रमाणवत् लक्षणामूलस्यापि तदहेतुत्वात्। एतेन पृथिवीत्ववती पृथिवी पिकः कोकिलः इत्येवमादयो व्याख्याताः। व्याख्यानव्याख्येयतया सहप्रयोगोपपत्तेश्च। वनादिकं च यदि वृक्षादिभ्योऽतिरिक्तं तदा घटादितुल्यम्। यदि नु त एव तर्हि न पृथक् लक्षणमस्तीति न तत्राव्याप्तिः। एवं खण्डचादावपि। तस्मात् प्रकृष्टादिवाक्यमखण्डार्थमेव। एवं सत्यज्ञानादिवाक्यमपि। तत्रापि स्वरूपप्रकाशस्य वेदान्तजन्यज्ञानस्य वा विचारात्पूर्वं सत्तानवधारणात्मत्वात् आत्मातिरिक्तज्ञानस्य बन्धानिवर्तकत्वेन तस्य जिज्ञासागोचरत्वायोगाच्च। अतो नासंभवः। अत एव द्वितीयमपि लक्षणं साधु। प्रातिपदिकार्थमात्रस्यैव बुभुत्सिततया तस्यैव प्रतिपाद्यत्वात्। न चाखण्डार्थत्वे सत्यादिपदानां पर्यायताप्रसङ्गः प्रवृत्तिनिमित्तभेदेन तदभावस्योक्तत्वात्। तस्माल्लक्षणवाक्यानामखण्डार्थत्वलक्षणम् अदुष्टम्। तत्प्रमाणं च तथैवेति निरूप्यते।

---

निरस्तत्वात् सैव जातिः तस्याः चन्द्रत्वादिविशेषो व्यक्तिविशेषोपहितत्वरूप एवेति तद्विशेष आवश्यक इत्याह—अविद्यात्मेति। फलितमाह—अत इति।

चन्द्रव्यक्तेः प्रकृष्टप्रकाशात्मकतया ज्ञातत्वेऽपि चन्द्रत्वव्यञ्जकव्यक्तिविशेषात्मना सन्देहादिदर्शनेन तेन रूपेणाज्ञातत्वात् एकत्राप्यावृतत्वानावृतत्वयोः उपपादनाच्चन्द्रात्मकतया जिज्ञासितव्यक्तिरेव वाक्येन लक्षणया प्रतिपाद्यते। अर्थाच्चन्द्रत्वज्ञानं भवतीति न वैशिष्ट्यं वाक्यप्रमेयमित्यर्थः।

मुख्यार्थान्वयेऽनुपपत्त्यभावात् कथं लक्षणेत्याशङ्क्याऽऽह—तात्पर्येति। कुन्ताः प्रविशन्तीत्यादौ अन्वयानुपपत्त्यभावेऽपि तात्पर्यानुपपत्त्यैव लक्षणाप्रवृत्तेर्दर्शनात् अत्रापि प्रतिवचनस्य बुभुत्सितचन्द्रप्रातिपदिकार्थं एव तात्पर्यविगमात् लक्षणावतार इत्यर्थः। वाक्यार्थप्रमितेस्तात्पर्यावगमजन्यत्वे परतस्त्वापातात् अपसिद्धान्तमाशङ्क्याऽन्यथासिद्ध्या परिहरति—न चैतावतेति। अज्ञातलक्ष्यस्वरूपपरमेव लक्षणवाक्यमित्येतदन्यत्राप्यतिदिशति—एतेनेति। किञ्च पिककोकिलपदार्थे भेदाभावात् तत्र पदार्थव्यावर्तकधर्मानुपादानात् न तत् लक्षणवाक्यम्। सहप्रयोगस्तु तदर्थभेदभ्रमनिरासादेवेत्याह—व्याख्यानेति। सखण्डवनादिलक्षणवाक्येऽव्याप्तिमाशङ्क्याह—वनादिकंचेति। घटादितुल्यमित्यखण्डमित्यर्थः। दार्ष्टान्तिकमुपपादयति—एवमित्यादिना। आत्मातिरिक्तज्ञानस्येति। आत्मातिरिक्तवस्तुविषयज्ञानस्य कल्पितवस्तुविषयत्वात् तमेव विदित्वेत्यादिवचनात् बन्धनिवर्तकत्वायोगात् तद्विषयस्य न जिज्ञास्यतेत्यर्थः। अपर्यायपदानां एकप्रातिपदिकार्थमात्रपर्यवसायित्वमिति लक्षणेऽप्युक्तन्यायान्न कोऽपि दोष इत्याह—अत एवेति। लक्षणे दोषनिरासमुपसंहरन् प्रमाणदोषनिरासं प्रतिजानीते श्लोकेन—तस्मादिति।

अखण्डार्थे अनुमानस्यादुष्टत्वनिरूपणम्

एवमनुमानमप्यदुष्टम्। तत्र न प्रथमे साध्याप्रसिद्धिः, लौकिकलक्षणवाक्यमात्रे साध्यस्य सत्त्वात्। प्राशस्त्यप्रतिपादक 'वायुर्वैक्षेपिष्ठे' त्यादिवाक्येषु तत्प्रसिद्धेश्च। नाप्यप्रसिद्धिः सत्यज्ञानानन्दाभेदस्याब्रह्मण्यभावेन ब्रह्मणस्तदात्मत्वेन चाव्याप्त्याद्यभावेन तस्य लक्षणत्वात्। ब्रह्मणो लक्षणान्तराभावाच्च। जगत्कारणत्वादेः कल्पितस्य वास्तवस्वरूपत्वानुपपत्तेः। न च सत्यादीनां धर्मत्वाभावे लक्षणत्वानुपपत्तिः असाधारणधर्मस्यैव लक्षणत्वादिति वाच्यम्। एवं परिभाषायां प्रमाणाभावात्। यद्विषयत्वेन ज्ञानस्य व्यावर्तकता तल्लक्षणम्। तद्विषयश्च स्वरूपमपीत्युक्तमिति स्वरूपमपि लक्षणम्। अन्यथा प्रमेयत्वादेः केवलान्वयिनो लक्षणाभावप्रसङ्गात्। तत्र प्रमेयत्वतारूपधर्मान्तरस्य प्रमेयेतरावृत्तित्वरूपस्यासंभवात्।

न च प्रमेयत्वमेव स्वधर्मतया स्वस्य लक्षणं स्ववृत्तित्वस्य संबन्धाभावेन निरस्तत्वात् साधारणत्वाच्च। एवं घटत्वादेरपि न धर्मो लक्षणम् तद्वृत्त्यसाधारणधर्मस्यासंभवात्। किञ्च सर्वत्र धर्मस्यैव लक्षणत्वे तत्तद्धर्ममालाप्रसङ्गः। तस्मात्

---

लक्षणे दोषनिरासमुपसंहरन् प्रमाणदोषनिरासं प्रतिजानीते—श्लोकेन—तस्मादिति। परोक्तपक्षे दोषं तावन्निरस्यति—तत्रेति। किञ्च विधेयेनान्वयप्रतीतेः पूर्वं प्राशस्त्यमात्रस्यार्थवादपदैः प्रतीतेः तत्र साध्यं सुप्रसिद्धमित्याह—प्राशस्त्येति। न च प्राशस्त्येऽपि लक्ष्यतावच्छेदकवैशिष्ट्यं प्रतीयत इति वाच्यम्। तथापि तस्य वाय्वादिपदार्थनिरूपितसंसर्गत्वाभावादिति भावः।

सत्यत्वादेर्जातित्वे उपाधित्वे वा ब्रह्मलक्षणत्वाभावादसिद्धमित्युक्तं निरस्यति—सत्यज्ञानानन्दाभेदस्येति। सत्यादिवाक्यस्य स्वरूपलक्षणपरत्वात् न त्वदुक्तचोद्यावकाश इत्यर्थः। वस्तुनः स्वरूपलक्षणस्यावश्यकत्वात् अन्यस्य च तस्याभावात् सत्याद्यात्मस्वरूपमेव तल्लक्षणमित्यभिप्रेत्याह—ब्रह्मण इति। असाधारणधर्म एव लक्षणं न धर्मिस्वरूपमिति पराभिमानं निरस्यति—न च सत्यादीनामिति। असाधारणधर्मातिरेकेण लक्षणपदार्थो दुर्वच इत्याशङ्क्याह—यद्विषयत्वेनेति। स्वरूपमपि लक्षणमिति। तथा च स्वरूपपरवाक्ये लक्षणवाक्यत्वं नासिद्धमिति भावः। असाधारणधर्म एव लक्षणमिति नियमे बाधकमाह—अन्यथेति। असंभवादिति। प्रमेयेतरस्याप्रसिद्धेरिति भावः। प्रमेयत्वे स्वातिरिक्तलक्षणाभावेऽपि स्वयमेव स्ववृत्तितया स्वलक्षणमित्याशङ्क्यासंभवातिव्याप्तिभ्यां दूषयति—न च प्रमेयत्वमिति। किञ्च तव जातिमात्रे लक्षणासिद्धिरित्याह—एवमिति। किं घटत्वे घटत्वत्वैवासाधारणधर्मः उत घटवृत्तित्वे सति पृथिवीत्वसाक्षाद्व्याप्यजातित्वादि। सर्वथापि घटाद्यनेकपदार्थ घटिततया तस्य घटत्वाश्रितत्वासंभवादित्यर्थः। किञ्च धर्मस्यैव लक्षणत्वे स किमवगतमात्रेण धर्मिणं व्यावर्तयति

स्वरूपलक्षणंसर्वत्र धर्मस्यैव। यावत्स्वरूपावस्थायिधर्मो विशेषलक्षणम्। कादाचित्कधर्मस्तटस्थलक्षणमिति विभाग.। अतो नासिद्धिः।

धर्मस्य स्वरूपलक्षणत्वनिरासः

यत्तु धर्म एव स्वरूपलक्षणमिति विरुद्धमिति। तदसत्। क्रियादेरपि घटादिधर्मत्वात्। न च यावद्धर्म्यनुवर्तमानो धर्मः एकत्वादौ तदप्रसिद्धेः तस्य द्रव्यमात्रासाधारणत्वाच्च। अभावस्याभावत्वातिरिक्तस्वरूपानङ्गीकारे स्वरूपद्वयात्मकस्वरूपसंबन्धाभावेनाभावत्वस्य धर्मत्वानुपपत्तेश्च। एवं समवायादेरपि। नापि किं चन्द्रलक्षणमिति असाधारणधर्मप्रश्नोत्तरं प्रकृष्टप्रकाश इत्यत्र व्यभिचारः। चन्द्रलक्षणमित्यत्र लक्षणशब्दस्य चन्द्रस्वरूपपरत्वे तदपि वाक्यमखण्डार्थम्। असाधारणधर्मपरत्वे तु असाधारणत्वविशिष्टधर्मत्वस्य दण्ड्यादितुल्यत्वान्न व्यभिचारः

बाधनिरासः

नापि बाधः—ज्ञानमालिन्यनिवृत्तये हि विचारः क्रियते। तन्मालिन्यं च

---

उतेतरव्यावृत्तत्रया? नाद्यः प्रमेयतया ज्ञातस्यापि तस्य व्यावर्तकत्वापातात्। द्वितीये तद्व्यावर्तकपरिज्ञाने तस्य व्यावृत्तत्वावगमः तदभावे तद्व्यावर्तकत्वायोगात्। तद्व्यावर्तकस्यापि अन्यस्य तथावगमापेक्षेत्यनवस्थापातात् न कस्यापि व्यावृत्तिसिद्धिरित्यभिप्रेत्याह—किञ्चेति। धर्मस्यैव लक्षणत्वमिति नियमायोगात् व्यावर्तकमेव लक्षणमिति तद्भेदं दर्शयन्नुपसंहरति—तस्मादिति। उभयत्र असाधारणधर्मो धर्मपदार्थः धर्मस्यैव स्वरूपलक्षणत्वात् तद्वाक्यमपि विशिष्टविषयत्वेन व्याप्तमिति परोक्तमनूद्य निराकरोति—यत्त्वित्यादिना। तदप्रसिद्धेरिति। द्रव्यस्वरूपत्वाप्रसिद्धेरित्यर्थः। यावद्द्रव्यभाव्यसाधारणधर्म एव स्वरूपमित्याशङ्क्याह—तस्येति। किञ्च परमते अभावे भावरूपस्याभावरूपस्य वाऽतिरिक्तस्याभावत्वस्यानभ्युपगमात् तदात्मकस्य तस्य तद्धर्मत्वायोगात् तल्लक्षणत्वं न स्यादित्याह—अभावस्येति। समवायादावपि जातेरुपाधेर्वाऽसाधारणधर्मस्यानिरूपणात् तदपि लक्षणहीनं स्यादित्याह—एवमिति। चन्द्रलक्षणवाक्ये व्यभिचारः पूर्वमेव निरस्त इत्यभिप्रेत्य परोक्तं व्यभिचारान्तरं निरस्यति—नापीति। दण्ड्यादितुल्यत्वादिति। यथा देवदत्ते दण्डवैशिष्ट्यबुभुत्सायां प्रयुक्तं दण्डी देवदत्त इति वाक्यं न तल्लक्षणवाक्यं एवं प्रकृष्टप्रकाशत्वे चन्द्रासाधारण धर्मत्ववैशिष्ट्यबुभुत्सायां प्रयुक्त प्रकृष्टप्रकाश इत्यस्यासाधारणधर्म इत्येतदुपादाय तस्मिन् असाधारण धर्मत्ववैशिष्ट्यपरत्वान्न लक्षणवाक्यतेति कुतो व्यभिचार इत्यर्थः।

यदप्युक्तं सप्रकारकज्ञानोद्देशेन श्रवणादिविधानानुपपत्त्या वेदान्तवाक्ये साध्याभावाद्बाध इति तन्निराकरोति—नापीति। यदप्युक्तं सप्रकारकज्ञानोद्देशेन श्रवणा-

सत्तानवधारणात्मत्वम् । ततश्च अज्ञानसमानविषयं सत्तावधारणात्मकं ज्ञानमविद्यां-निवर्तयति न तु तस्य सप्रकारत्वमपि प्रयोजकम्, तेन विनाऽनुपपत्त्यभावात् । तस्यापि सत्तानिश्चयरूपस्यैव तन्निवर्तकत्वात् । किञ्च सप्रकारकत्वं नाम ज्ञाने साकारत्वं, तच्च सविषयत्वमेव । तच्चाखण्डविषयज्ञानस्यापीति कुतो बाधः

ननु प्रकारो विशेषणं तद्विशिष्टविषयं ज्ञानं सप्रकारकमिति चेत्, न, चित्रगुरिति ज्ञानस्य निष्प्रकारकत्वप्रसंगात् । व्यावर्तक प्रकार इति चेत् तर्हि त्वदभिमत 'प्रमेय' मित्यादिज्ञानानां सप्रकारत्वं न स्यात् । व्यावृत्तिबोधकज्ञान-विषयत्वरूपव्यावर्तकत्वस्य घटज्ञानेऽप्रतीतेश्च ।

वस्तुतः व्यावर्तकविषयत्वस्य पराभिमतनिर्विकल्पके अस्मन्मते ब्रह्मसा-क्षात्कारे च सत्वाच्च । ब्रह्मण एव स्वमहिम्ना जडव्यावर्तकत्वात् ।

प्रकारलक्षणानां परोक्तानां निरासः

न च भासमानवैशिष्टचप्रतियोगी प्रकारः तद्विषयकं ज्ञानं सप्रकारकमिति वाच्यम् । लाघवेन सविषयत्वस्यैव सप्रकारशब्दार्थत्वात् । किञ्च भासमान-वैशिष्टचप्रतियोगी प्रकारः तद्विषयत्वं ज्ञाने सप्रकारत्वं चेत् ज्ञानस्य स्वविषयत्वा-पत्तिः ज्ञानविषयत्वस्यैव भासमानशब्दार्थत्वात् । यद्वैशिष्टचं यत्र विषयः तज्ज्ञानं तत्प्रकारकमिति चेत् न, विशेष्यस्यापि प्रकारत्वप्रसङ्गात् । अभावविशिष्ट-

---

दिविधानानुपपत्त्या वेदान्तवाक्ये साध्याभावात् बाध इति तन्निराकरोति—नापीति । ज्ञानस्वरूपोद्देशेन न विचारादिविधिः तस्य निरपेक्षश्रुतिप्रमाणायत्तत्वात् किन्तु तस्यासंभावनादिप्रयुक्तसत्तानवधारणात्मत्वनिवृत्तये । तेन तन्निवृत्तौ पश्चादुत्पद्यमानम-ज्ञानविषयाखण्डात्मनि सत्तावधारणमिति तत एव संसारमूलाविद्यानिवृत्तिसंभवात् न त्वदुक्तानुपपत्तिरित्यर्थः ।

किञ्च प्रकारो नाम किं विषयमात्रं वा विशेषणं वा व्यावर्तको वा भासमान-वैशिष्ट्यप्रतियोगि वा ? आद्ये न विरोधः । द्वितीयादिकं त्वयुक्तमिति दूषयति—किञ्चे-त्यादिना । निष्प्रकारत्वप्रसंगादिति । तत्र गवां विशेषणत्वादित्यर्थः । सप्रकारत्वं न स्यादिति । प्रमेयत्वादीनामव्यावर्तकत्वादित्यर्थः । किञ्च किं व्यावर्तकत्वेन तद्विषयं ज्ञानं सप्रकारकं उत वस्तुतो व्यावर्तकविषयज्ञानं ? नाद्यः स्वस्यैव व्यावृत्तिबोधकत्वेन स्वस्य स्वविषय-त्वायोगात् तद्घटितव्यावर्तकत्वग्रहानुपपत्तेरित्याह—व्यावृत्तीति । द्वितीये दोषमाह— वस्तुत इति । किं भासमानवैशिष्ट्यप्रतियोगित्वेन तद्विषयं ज्ञानं सप्रकारकं उत वस्तुतस्तद्विषयंज्ञानं ? नाद्य इत्याह—ज्ञानस्येति । द्वितीयमुत्थाप्य निरस्यति—यद्वैशिष्ट्य-मित्यादिना । विशेष्यस्यापीति । वस्तुतो वैशिष्ट्यस्य संबन्धापरपर्यायस्य उभयधर्मिकत्वात् उभयप्रतियोगिकत्वात् घटत्वादेरपि वस्तुतस्तत्र प्रतियोगित्वाकाराप्रतिभासाच्चेत्यर्थः ।

ज्ञानस्य निष्प्रकारत्वप्रसङ्गाच्च। तत्र स्वरूपातिरिक्तवैशिष्ट्याभावात्। अभावस्य भूतलादेश्च अन्योन्याप्रतियोगित्वात्। स्वप्रतियोगित्वाभावाच्च। एवं प्रमेयमिति ज्ञाने विश्वमात्रस्य परमते प्रकारत्वापाताच्च। घटत्वादिवैशिष्ट्यस्यापि तत्र प्रतीतेः। ननु तत् प्रमेयत्ववैशिष्ट्यं न भवतीति चेत्। किं ततः।

ननु सन्निकर्षविधया यत्प्रतीयते तदेव वैशिष्ट्यं विवक्षितमिति चेत्। यदि विधाशब्दस्य प्रकारत्वमर्थः तर्हि आत्माश्रयः। न चापरेऽस्य सन्निकर्षे तदस्ति। प्रत्यासत्तिं विना यद्वैशिष्ट्यं प्रतीयते तद्विवक्षितमिति चेत्। तर्हि प्रत्यक्षे घटत्वादेः प्रकारत्वं न स्यात्। इन्द्रियसन्निकर्षादेव तत्सन्निकर्षस्य प्रतीतेः। प्रमेयमितिज्ञाने घटत्वादेः प्रकारत्वे तत्संशयाद्यभावप्रसङ्गात्। ननु तदंशे तत् सत्तानवधारणात्मकमिति चेत्। तर्हि किं प्रकारत्वेन।

---

न च स्वाधिकरणे भासमानवैशिष्ट्यप्रतियोगी प्रकार इति वाच्यम्। पटशौक्ल्यमित्यादिज्ञाने पटादेरप्रकारत्वापातादिति भावः। किञ्च भूतलं घटरहितमित्यादौ भूतलघटाभावातिरिक्तवैशिष्ट्याभावात् स्वरूपद्वयमेव वैशिष्ट्यं वाच्यम्। तत्र घटप्रतियोगिकाभावे भूतलप्रतियोगित्वस्य स्वप्रतियोगित्वस्य चाभावेन तदात्मकवैशिष्ट्यप्रतियोगित्वस्याप्यभावात् ज्ञानं निष्प्रकारकं स्यादित्याह—अभावेति। किञ्च भासमानपदेन किं भानविषयत्वमात्रं वैशिष्ट्यस्य विवक्षितं उत विशिष्य संबन्धविधया भासमानत्वं प्रत्यासत्तिं विना भासमानत्वं वा? नाद्यः अतिप्रसंगादित्याह—एवमिति। प्रमेयमित्यत्र प्रमेयत्ववैशिष्ट्यमेवोल्लिख्यते न घटत्वादिवैशिष्ट्यमित्यभिप्रेत्य शङ्कते—नन्विति। तथापि प्रमेयत्वप्रत्यासत्त्या तस्यापि भानात् त्वदुक्तलक्षणस्यातिव्याप्तिरित्यभिप्रेत्याह—किं तत इति।

द्वितीयमुद्भावयति—ननु सन्निकर्षेति। किं विधाशब्देन प्रकार उच्यते, अन्यो वा? न द्वितीयः, तस्याप्रसिद्धेरित्यभिप्रेत्य आद्ये तस्यैव निरूप्यमाणत्वात् आत्माश्रय इत्याह—यदीति। घटत्वादिविशिष्टज्ञाने वैशिष्ट्यस्य सन्निकर्षत्वेन भासमानत्वं चासिद्धमित्याह—न चेति। तृतीयमुद्भाव्य निराकरोति—प्रत्यासत्तिमित्यादिना। सन्निकर्षादेवेति। घटे घटत्वसमवायस्य तत्तादात्म्यस्य वा संयुक्तसमवायरूपात् संयोगरूपाद्वा सन्निकर्षात् प्रतीतेः अन्यथा तस्य ऐन्द्रियकज्ञानविषयत्वायोगादित्यर्थः प्रमेयमितिज्ञाने विश्वस्य प्रकारत्वमिष्टमिति वदन्तं प्रत्याह—प्रमेयमिति। किं प्रकारत्वेनेति। सप्रकारकज्ञानस्यापि सत्तावधारणात्मतयैव संशयादिविरोधित्वेऽखण्डात्मविषयज्ञानस्यापि सत्तावधारणात्मत्वात् संशयादिनिवर्तकत्वसंभवात् किं सप्रकारत्वेनेत्यर्थः। किं तर्हि सप्रकार-

प्रकारत्वनिरुक्तिः

तस्मात् सविषयत्वं सप्रकारत्वं साकारत्वमिति पर्यायाः। प्रतिपक्षानुमानेषु मध्ये ब्रह्मतज्ज्ञानपक्षकं धर्मिग्राहकप्रमाणबाधितम्। सत्यं ज्ञानमनन्तमिति वाक्यतात्पर्यगम्यस्यानन्तस्य संसृष्टत्वानुपपत्तेः। अनन्तत्वं हि अभावाप्रतियोगित्वं अन्तशब्दस्य परिच्छेदवाचिनोऽभावपर्यवसानात्। न च ध्वंस एवानन्तः। ध्वंसत्वस्याभावत्वघटितत्वेन विशिष्टस्य शक्यत्वे गौरवात्। नगरान्तः सीमान्त इत्यादि प्रयोगे तदर्थत्वासंभवाच्च।

संसर्गाभावनिरासः

अस्तु तर्हि संसर्गाभाव इति चेत् न। संसर्गाभावस्यैकस्याभावात्। गौरवाच्च। कथं तर्हि अनन्तमाकाशमिति प्रयोगः। न ह्याकाशोऽद्वितीयो भवतीति। न, आकाशस्यानित्यत्वात्। प्रचुरव्यवहारानुसारेण लाघवादभाव एवान्त इति निर्णीयते। अमरादिशब्दवत् चिरस्थायितामात्रेणौपचारिकत्वाच्च। ततश्च ब्रह्माद्वितीयं सत्यज्ञानवाक्यार्थ इति संसर्गसाधनानुमाने बाधः।

अतएव द्वितीयादिकमप्यसाधु। एवं वेदैश्च सर्वैरहमेव वेद्य इत्यादिस्मृतिबाधितं प्रकृष्टप्रकाशादिवाक्यतात्पर्यगोचरे व्यभिचारश्च। तस्यासंसर्गत्वात्।

---

शब्दालम्बनमिति वीक्षायामाह—तस्मादिति। ब्रह्मतज्ज्ञानपक्षकमिति। सत्यादिवाक्यतात्पर्यगोचरपक्षकानुमानं वेदान्तजन्यप्रमापक्षकमनुमानं चेत्यर्थः।

अनन्तस्यापि संसृष्टत्वमविरुद्धमिति शङ्कायामाह—अनन्तत्वं हीति। अभावपर्यवसानादिति। तथा च अन्योन्याभावस्यापि निषेधेन भेदाभावान्न तदपेक्षःसंसर्ग इति भावः। अभावत्वघटितत्वेनेति। अभावत्वे सति उत्पत्तिमत्त्वं हि ध्वंसत्वं तस्यानन्तपदशक्यत्वे गौरवात् अभावत्वमेव तच्छक्यमित्यर्थः। प्रतियोगिनि सति अन्यत्र तदभावमात्रेणान्तपदप्रयोगादपि न ध्वंसस्तदर्थ इत्याह—नगरेति। तर्हि अन्योन्याभावातिरिक्ताभाव एव तदर्थ इति शङ्कते—अस्त्विति। अनेकार्थत्वप्रसङ्गेन दूषयति—न संसर्गेति। अन्योन्याभावातिरिक्ताभावत्वादिनाऽनुगमात् एकार्थत्वमिति शङ्कायामाह—गौरवाच्चेति। प्रामाणिकं गौरवं न दोषायेति शङ्कते—कथं तर्हीति। आकाशस्योत्पत्तिविनाशवत्त्वेन तत्रानन्तपदस्य कथमपि मुख्यत्वायोगात् तत्र तस्यौपचारिकत्वमेव। ततश्च लाघवानुगृहीतप्रचुरप्रयोगादभाव एवानन्तपदार्थ इत्याह—नाकाशस्येत्यादिना। फलितमाह—ततश्चेति।

श्रुतिविरुद्धत्वादेव सत्यादिवाक्यपक्षकानुमानमपि न साधकमित्याह—अतएवेति। तत्र साध्यभेदेनानुमानभेदादादिग्रहणम्—श्रुतिबाधितमिति। अहमेव वेद्य इत्येवकारेणात्मातिरिक्तस्य श्रुतितात्पर्यगम्यत्वनिषेधादित्यर्थः। प्रमाणवाक्यतात्पर्यगोचरत्वादितिहेतोरनैकान्तिकतामप्याह—प्रकृष्टेति। द्वितीयहेतोरपि प्रकृष्टादिवाक्य

प्रमापक्षकानुमाने प्रथमं सिद्धसाधनम्; ज्ञाने विषयस्यैव प्रकारत्वात्। पारिभाषिक-प्रकारत्वस्य निरस्तत्वात्। अप्रयोजकत्वं च सर्वेषां हेतूनाम्। नापि तन्मात्रप्रश्नोत्तर-त्वादिति हेतोः सत्यादिवाक्येष्वसिद्धिः प्रश्नोपलम्भाभावेऽपि अन्यत्रेव प्रकृतेऽपि तस्य कल्प्यत्वात्। उत्तरं चानन्तवस्तुपरमिति प्रश्नोऽपि तथैव कल्पयितुमुचितः। त्वंपदार्थविषयवाक्यपक्षकं चेदमनुमानम्। तत्र कतम इति श्रुतिः न जात्यभि-प्राया तस्यास्तस्मिन्नेकस्मिन् न्यायोपबृंहितश्रुत्यैव निरस्तत्वात्। किन्तु देहा-दिभ्यो निर्धारकस्वरूपपरा। न च सर्वस्याप्युत्तरस्य प्रश्नधर्मिनिष्ठनिर्धारितैक-प्रकारकत्वात् विरुद्धो हेतुः।

उत्तरं प्रश्नतात्पर्यविषयविषयकमिति हि नियमः। अन्यथा ततोभिन्न विषयत्वेन संशयानपायात्। प्रश्नविषयो धर्मी चेत् स एवोत्तरप्रकारः। धर्मश्चेत् स एवेति न सर्वत्रापि धर्म एव प्रकार इति नियमः। धर्मिमात्रप्रश्ने धर्मवैशिष्ट्य-तात्पर्यान्तरस्य वैयर्थ्यप्रसंगाच्च। तेन विनापि संशयादिनिवृत्तिसंभवा-दित्युक्तम्।

यत्तूत्तरस्य प्रश्नादधिकविषयत्वाभावे उत्तरमेव न स्यादिति तदप्यनेन निरस्तम्। ब्रह्मस्वरूपं किमिति जिज्ञासायां सत्यादिवाक्येन सत्यत्वादिसाधारण-

---

एव व्यभिचार इति द्रष्टव्यम्। वेदान्तजन्यप्रमा सप्रकारेत्यत्र दोषान्तरमाह—प्रमेति। एवं लक्षणवाक्यत्वहेतौ परोक्तदोषान्निरस्यान्यत्रापि तान्निराकरोति—नापीति। अन्यत्रे-वेति। भृगुवल्ल्यां अधीहि भगवो ब्रह्मेति प्रश्नदर्शनात् ब्रह्मवल्ल्यामपि तस्य गुणोप-संहारन्यायेनान्वयादित्यर्थः। यदुक्तं कल्प्यस्य उत्तरानुसारेण धर्मविषयत्वमिति तत्राह—उत्तरं चेति। त्वंपदार्थे कतम आत्मेति प्रश्नदर्शनात् योऽयं विज्ञानमय इत्यादि-तदुत्तरवाक्येऽखण्डार्थत्वं साध्यते तत्र नासिद्धिशङ्कापीत्याह—त्वंपदार्थेति। तर्हि वा बहूनामिति सूत्रात् जातिविषयत्वं प्रश्नस्येत्याशङ्क्याह—तत्रेति। अतोऽन्यदार्तम्, स एष नेतिनेत्यात्मा, असंगो ह्ययं पुरुषः, मायया ह्यन्यदिव, न ह्यस्ति द्वैतसिद्धिः, एकमेवा-द्वितीयं, इत्यादिश्रुतिशतैः दृश्यत्वादिन्यायोपेतैः आत्मनि वास्तवजात्यादिसंबन्धनिषेधात् न पराभिमतजातिसंबन्धपरेयं श्रुतिः। किन्तु अहमिति व्यवहारविषयतया सजातीयेभ्यो देहादिभ्यो विविच्य त्वंपदार्थस्यासाधारणरूपेण निर्धारणपरेत्यर्थः।

अत्र परोक्तमपि विरोधं निरस्यति—न च सर्वस्येत्यादिना। धर्मिमात्रप्रश्नोत्तरस्य धर्मवैशिष्ट्यपरत्वकल्पने प्रयोजनाभावात् गौरवं चेत्याह—धर्मिमात्रेति। विशिष्टज्ञानं विना संशयनिवृत्त्ययोगात् न वैयर्थ्यमित्यत आह—तेनेति। आप्तोपदेशजन्यधर्मिस्वरूप-सत्तावधारणादेव संशयादेर्निवृत्तिसंभवादित्यर्थः—अनेन निरस्तमिति। प्रश्नविषयनिर्धा-रकमेवोत्तरमिति निरूपणेनेत्यर्थः। किञ्च सत्यादिवाक्यस्य धर्मपरत्वे कोविदारोत्तरवत् उत्तराभासत्वं स्यादित्याह—ब्रह्मस्वरूपमिति। ब्रह्मस्वरूपं न जिज्ञास्यं तस्यानुमानादि-

धर्मकीर्तने तदनिवृत्तेरनुत्तरत्वप्रसंगाच्च । न हि ब्रह्मणि सत्तादिधर्मिणि जिज्ञासा भवति । तस्यागमं विनापि निश्चेतुं शक्यत्वात् । हैतुकैरपि वैशेषिकादिभिः तस्मिंस्तस्य विनिश्चितत्वात् । ब्रह्मणो निर्धर्मसदात्मरूपं त्वागमेन विना केनचिन्निश्चेतुं न शक्यम् । अत एव ब्रह्मणःसदाद्यात्मत्वविप्रतिपत्तिनिरासाय सत्तादिवैशिष्ट्यं प्रतिपाद्यत इति निरस्तम् । सत्तादिवैशिष्ट्यं विना ब्रह्मणः सदाद्यात्मत्वस्य प्रतीतेः । विशिष्टतात्पर्यकल्पने गौरवाच्च । "आत्मन आकाश" इत्यादिवाक्येनापि आनन्त्योपपिपादविषया प्रपञ्चोपादानत्वं बोध्यते । ननु तत्स्वरूपप्रतिपिपादयिषया "उदरमन्तरं कुरुते अथ तस्य भयं भवति" इति भेददर्शनस्य तत्प्रकरणे निषिद्धत्वात् । 'यतो वाचो निवर्तन्त इति वाक्येन निष्प्रपञ्चानन्दसाक्षात्कारात् भयनिवृत्तेश्चोक्तत्वात् । तत उत्तरं केवलपरमेव ।

यत्तु अध्ययनं करोतीत्यादिवाक्ये व्यभिचार इति; न, तत्रापि किंशब्दाभिप्रेताध्ययनप्रातिपदिकार्थस्यैव प्रतिपाद्यमानत्वात् । स च प्रातिपदिकार्थोऽध्ययनत्वादिसंसृष्ट इत्यन्यदेतत् ।

अखण्डार्थेऽनुमानं

तस्मात् सत्यादिवाक्यं पदोपस्थापितपदार्थसंसर्गागोचरप्रमितिजनक पदोपस्थापितपदार्थसंसर्गागोचरतात्पर्यम् एकप्रातिपदिकार्थमात्रपरं वा लक्षण-

---

नैवावगमात् । किन्तु तस्य सत्यत्वज्ञानगुणकत्वादिधर्मवत्त्वं चेत्याशङ्क्य तत्स्वरूपविशेषस्य ततो निश्चयान्नैवमित्याह—ब्रह्मण इति ।

ब्रह्मणि सत्यत्वादिवैशिष्ट्यस्याऽन्यतोऽवगमेऽपि तस्य अखण्डत्वविप्रतिपत्तिनिराकरणेन सत्यादिवाक्यमर्थवदित्याशङ्क्याह—अतएवेति । भेदग्राहिमानविरोधेन अखण्डब्रह्मणि अन्यतः प्रतिपत्त्ययोगात् सत्यादिवाक्यादेव तत्प्रतीतिर्वाच्या । सा कथं तत एवएव बाध्येत्यर्थः । विशिष्टे तात्पर्यायोगादपि नैवमित्याह—विशिष्टेति । जगदुपादानत्वादेरपि श्रुतिगम्यत्वात् कथमखण्डे वेदान्ततात्पर्यमित्याशङ्क्य तस्या अपि निमित्तोपादानकार्यकारणवास्तवभेदनिरासपरत्वान्न विरोध इत्याह—आत्मन इति । किमत्र विनिगमकमित्यत आह—उदरमिति । यतो वाच इत्यत्र आनन्दं ब्रह्मणो विद्वान् इत्यद्वैतब्रह्मसाक्षात्कारादनर्थनिवृत्तिरूपफलश्रवणादप्यद्वैत एव तात्पर्यमित्याह—यत इति । परोक्तव्यभिचारान्तरमनुवदति—यत्त्विति । किंकरोतीति क्रियमाणस्वरूपस्यैव जिज्ञासितत्वात् उत्तरमपि तन्मात्रनिर्धारकमित्याह—न तत्रापीति । तथाप्यध्ययनत्वविशिष्टाध्ययनपरत्वात् सखण्डार्थत्वमित्याशङ्क्य तस्यैवाध्ययनप्रातिपदिकार्थत्वेनोक्तसाध्यवत्त्वात् न व्यभिचार इत्याह—स चेति ।

परोक्तदोषाणामाभासत्वात् अखण्डार्थत्वानुमानमनवद्यमित्याह—तस्मादिति ।

वाक्यत्वात्। प्रातिपदिकार्थमात्रप्रश्नोत्तरत्वाद्वा लौकिकलक्षणवाक्यवत्। न चासिद्धचादिरित्युक्तम्। न चाप्रयोजकत्वम् अन्यथा स्वरूपजिज्ञासाया अनिवृत्तेः। अनिर्णीते हि ब्रह्मपदार्थे तत्संसर्गस्य वाक्येन प्रमापयितुमशक्यत्वाच्च अलौकिकब्रह्मनिर्णयश्च सत्यादिवाक्यादेवेति तत् तावन्मात्रनिष्ठं पदार्थप्रतिपाद्यसंसर्गप्रतिपादनस्य विरम्य व्यापारप्रसंगेनायोगात्।

ननु वृद्धिशाली ब्रह्मपदार्थं इति व्याकरणादिभिर्निर्णीतत्वात् संसर्गनिष्ठं वाक्यमितिचेत्। न सामान्यतोऽवगतब्रह्मत्वस्यैव विशेषनिर्धारणं विनाऽपर्यवसा त्।

पर्यवसन्नपदार्थाभिधानानामेव पदानां संसर्गबोधकत्वात् बृहत्वस्य लोके बहुप्रकारस्य दर्शनात्। तथा च व्याकरणादिभिरवगतब्रह्मत्वस्यैवासति सङ्कोचकप्रमाणे निरवधिकत्वस्यैव युक्तत्वेन सर्वात्मतायोग्यमेव तदिति सत्यज्ञानादिवाक्यैः सत्यज्ञानानन्तानन्दात्मना प्रतिपाद्यते तेषां भेदे ब्रह्मणः सर्वात्मत्वायोगात। तेषां च श्रुतिन्यायसिद्धतया सत्यत्वात्।

---

विशिष्टविषयप्रश्नोत्तरवाक्ये व्यभिचारवारणाय प्रातिपदिकार्थमात्रेत्युक्तम्। सत्यादिवाक्यस्य संसर्गपरत्वे बाधकाभावादप्रयोजकत्वमित्याशङ्क्याह—न चेति। किं ब्रह्मपदार्थे निर्णीते तत्संसर्गः सत्यादिवाक्याद्बोध्यते उतानिर्णीते ? नान्त्यः, पदार्थनिर्णयस्य वाक्यार्थबोधहेतुतया तेन विना तदयोगादित्याह—अनिर्णीते हीति। आद्येऽपि किं मानान्तरात् ब्रह्म निर्णीतं उत सत्यादिवाक्यादेव ? नाद्यः, तस्य तदगोचरत्वात्। द्वितीये ब्रह्मस्वरूपपरत्वस्यावश्यकत्वात्।

तत्प्रतिपाद्य पुनर्व्यापारान्तरेणास्यैवार्थान्तरप्रतिपादकत्वायोगात् स्वरूपमात्रनिष्ठत्वं सत्यादिवाक्यस्यानिच्छताप्यभ्युपेयमित्याह—अलौकिकेति। अन्यत एव ब्रह्मपदार्थनिर्णयसंभवात् सत्यादिवाक्यं संसर्गमात्रपरमिति शङ्कते—नन्विति। व्याकरणादिना ब्रह्मत्वमात्रं ब्रह्मपदार्थं इति सिध्यति नैतावता तत्प्रतीतिः पर्यवसन्ना। लोके ब्रह्मत्वस्य बहुविधस्योपलम्भात् तद्विशेषाकाङ्क्षणात्। अतः सत्यादिवाक्यादेव तदर्थनिर्धारणमित्याह—न सामान्यत इति।

मास्तु विशेषपर्यवसानमित्याशङ्कायामाह—पर्यवसन्नेति। अन्वयप्रतियोगितावच्छेदकविशिष्टार्थोपलम्भे हि पदानामन्वयबोधकत्वं, ततश्च ब्रह्मणोऽपि जीवादिव्यावृत्तरूपेण ब्रह्मपदादनुपस्थितौ न तत्संसर्गबोधकत्वमित्यर्थः। अथवा सामान्याभिधानस्य व्यक्तिप्रतिपत्तिं विना पर्यवसानाभावात् व्यक्तेश्च शक्यसंबन्धितया मानान्तरेणावगताया एवापर्यवसानेन लाभात् तदन्वयो वाक्यादवगम्यते। अलौकिकब्रह्मणस्तु ब्रह्मपदार्थबृहत्वसामान्यापर्यवसानेनालाभात् न तदन्वयस्तद्वाक्यादवगतुं शक्यः। ततश्च व्याकरणादिप्रतिपन्नसामान्यापेक्षितविशेषस्वरूपपरमेव सत्यादिवाक्यमित्यर्थः। ज्ञानत्वादिवन्मिथ्यात्वेऽपि ब्रह्मणः सर्वात्मत्वसंभवान्न तदभेदः श्रुत्या प्रतिपादनीय

सत्यादिवाक्यवैयर्थ्यशंका।निरास

यत्तु यतोवेत्युपक्रम्य 'तद्ब्रह्म' "ब्रह्मैवेदं विश्वमिदं वरिष्ठं" इति सामानाधिकरण्यात् ब्रह्मनिर्णय इति किं सत्यादिवाक्येन पदार्थपरेणेति।

तन्न। वाक्यान्तरस्य हि ब्रह्ममात्रपरत्वेनाखण्डार्थत्वे सत्यादिवाक्ये तत् किं न स्यात्। न हि कल्पितजगत्कारणत्वमपि तद्वाक्यार्थो भवति। न वा जडस्य सर्वस्य ब्रह्माभेदः तेन सत्याद्यात्मकत्वासिद्धेश्च।

एतेन क्षित्यादिकारणतया निर्णीते चेतने धर्मिणि ब्रह्मशब्दशक्तिनिर्णयात् सत्यादिवाक्यं संसर्गं बोधयिष्यतीति निरस्तम्। औपनिषदस्य मानान्तरागोचरत्वात्। अनुमानात्तदसिद्धेरुक्तत्वात्।

तस्मात् सत्यादिवाक्यं ब्रह्मनिष्ठम् एवमस्थूलादिवाक्यमपि। योऽयं विज्ञानमय इत्यादिवाक्यमपि 'कतम आत्मे'ति जिज्ञासितप्रत्यगात्ममात्रनिष्ठं, चैतन्यातिरिक्ते कल्पितेऽपुरुषार्थे तत्र श्रुतितात्पर्यायोगात्। स्वरूपातिरिक्तस्य ब्रह्मणा संबन्धाभावेन तद्वैशिष्टयस्य प्रमाणश्रुतिप्रतिपाद्यत्वायोगाच्च। ब्रह्मणो निर्गुणत्वश्रुतिविरोधाच्च। ब्रह्मविदाप्नोति परमित्यत्र ब्रह्मण एव ज्ञानस्य मुक्तिहेतुत्वावगमात् आनन्दं ब्रह्मणो विद्वानिति ब्रह्मानन्दज्ञानस्यैव भयनिवर्तकत्वश्रवणाच्च।

न च तत्र ब्रह्मातिरिक्त एवानन्दो वेदितव्यत्वेन निर्दिश्यते। आनन्दाद्ध्येव

---

इत्यत आह—तेषामिति। सर्वात्मकं जगत्कारणं ब्रह्मपदार्थ इति वाक्यान्तरेण वैशिष्ट्यावगमात् सत्यादिवाक्यं संसर्गपरमिति चोद्यमनूद्य निरस्यति—यत्त्वित्यादिना। किं 'यतो वे'त्यादिना ब्रह्ममात्रं तात्पर्यतोऽवगतं जगत्कारणत्वादिविशिष्टं वा? आद्ये लक्षणवाक्यत्वाविशेषात् सत्यादिवाक्यमपि तन्मात्रपरमित्याह—वाक्यान्तरस्येति। द्वितीयं निरस्यति—न वाजडस्येति। तथा च यद्रजतं सा शुक्तिरितिवत् दृश्यमात्रोपमर्दनेन तदधिष्ठानात्मैवेदं सर्वमिति वाक्यार्थ इति भावः। ज्ञानानन्दादिभेदभ्रमनिवर्तकज्ञानविषयस्य सत्यादिवाक्यगम्यस्वरूपविशेषस्य वाक्यान्तरादसिद्धेश्च तस्य नान्यपरतेत्याह—तेनेति। ब्रह्मपदार्थस्यानुमानेनैव निर्णयात् सत्यादिवाक्यमन्यपरमिति तार्किकचोद्यं निरस्यति—एतेनेत्यादिना। निषेधमुखेन तत्पदार्थपरवाक्येऽप्युक्तन्यायमतिदिशति—एवमिति। त्वंपदार्थशोधकवाक्यमप्यखण्डार्थमेवेत्युपपादयति—योऽयमित्यादिना। ब्रह्मणः सत्यत्वादिवैशिष्ट्यप्रतिपादनेऽपि सदाद्यात्मत्वसिद्धेः किमखण्डार्थत्वेनेत्याशङ्क्याह—स्वरूपातिरिक्तस्येति। जातिगुणादेः ब्रह्मणि संयोगतादात्म्यसमवायान्यतमस्य वास्तवस्यासंभवात् अनिर्वचनीयस्य च श्रुतितात्पर्यगोचरत्वायोगात् सर्वात्मत्वयोग्यब्रह्मपदार्थप्रतिपत्तौ इतरान्वययोग्यताभावाच्च न तत्परतेत्यर्थः। ब्रह्मातिरिक्तस्यापुरुषार्थत्वं प्रपञ्चयति—ब्रह्मविदिति। ब्रह्मानन्दज्ञानस्येति। ब्रह्मात्मकानन्दज्ञानस्येत्यर्थः।

ब्रह्मण आनन्दमिति भेदनिर्देशात् न तयोरभेद इत्याशङ्क्याह—न चेति। न च

खल्विमानि भूतानि जायन्ते इत्यानन्दस्यैव ब्रह्मात्मतानिर्देशात्। "उदरमन्तरमित्या" दिश्रुत्या भेददर्शनस्यानर्थहेतुत्वप्रतीतेश्च। न च तमेवं विद्वानमृत इह भवति इति विशिष्टब्रह्मज्ञानस्य मुक्तिहेतुत्वं श्रुतमिति वाच्यम्। तत्र हि सर्वात्मकत्वं पूर्वत्र प्रतिपादितं एवंशब्द आह। न च सर्वात्मत्वं सति किञ्चिद्भेदेऽपि सङ्गच्छते। अतः कल्पितसर्वाधिष्ठानं आनन्दं विद्वानमृतो भवति न तु भिन्नमात्मनमिति दर्शयन्ती श्रुतिः केवलात्मज्ञानस्यैव मुक्तिसाधनत्वं विषयीकरोति। 'एकधैवानुद्रष्टव्यमिति ब्रह्मदर्शनस्यैकाकारत्वश्रवणाच्च।

एमधैवानुद्रष्टव्यमित्यस्य तात्पर्यम्

अत्र हि प्रकारार्थः प्रत्ययः। प्रकारश्च ज्ञान आकारः। स च विषय एवेत्युक्तम्। तथा च ब्रह्मदर्शनस्याखण्डविषयत्व एवैकाकारत्व, विशिष्टविषयत्वे तु अनेकप्रकारत्वप्रसङ्गात्। पराभिमतेश्वरे तदभिमतप्रकारस्यापि बाहुल्येनैकधैवेत्ययोगात्। न चैवमप्येकत्वविशिष्टस्यैव प्रकारत्वात् अखण्डार्थत्वक्षतिः एकशब्दस्य सङ्ख्योपसर्जनकवस्तुपरत्वात्। उपसर्जनसङ्ख्यायाः तद्वाक्यशेषेण बाधितत्वात् एका संख्येतिवत् एकशब्दोपपत्तेश्च।

अत एव धाप्रत्ययार्थप्रकारवैशिष्ट्यस्य तत्त्वादखण्डार्थत्वक्षतिरिति

---

भेदनिर्देशविरोधादेव 'आनन्दाद्धचेवेत्यानन्दगुणकादि कल्प्यत इति वाच्यम्। ब्रह्मण आनन्दभिन्नत्वे हेयत्वप्रसङ्गात् तयोः सम्बन्धानिरूपणात् चिद्रूपब्रह्मभिन्नस्य दृश्यतया मिथ्यात्वाच्च। वास्तवगुणगुणिभावानुपपत्तेः भेदनिर्देश एव राहोः शिर इतिवत् व्याख्येय इति भावः। तत्प्रकरणे भेदस्य निन्दितत्वादपि तन्निर्देश औपचारिक इत्याह—उदरमिति। सर्वात्मकत्वं पूर्वत्रेति। पुरुष एवेदं सर्वमिति पुरुषजडभेदनिषेधात्। 'सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाऽभिवदन् यदास्ते' इति सजातीयचेतनेनाभेदाभिधानाच्च सर्वात्मत्वमेवापूर्वं पूर्वत्र प्रतिपादितमिति तत्तदेव एवमिति परामृश्यत इत्यर्थः। आत्मैव ज्ञेयो मोक्षाय नान्य इति श्रुतिसामान्यं दर्शयति—एकधैवानुद्रष्टव्यमित्यादिना। एकाकारत्वश्रवणाच्चेति। अवधारणेन नानाकारत्वनिषेधाच्चेति द्रष्टव्यम्। प्रकारार्थे धाप्रत्ययविधानात्। वैशिष्ट्यप्रतियोगिन एव प्रकारत्वात् कथमखण्डविषयत्वसिद्धिरित्याशङ्क्य प्रकारः प्रत्ययार्थ इत्येतदङ्गीकृत्यान्यन्निरस्यति—अत्र हीति। धर्मस्यैव प्रकारत्वेपि परमते इयं श्रुतिरसमञ्जसा स्यात् ब्रह्मणोऽनन्तधर्माभ्युपगमात् अवधारणायोगादित्याह—पराभिमतेति। प्रकृत्या एकत्वसंख्याभिधानात् तद्वैशिष्ट्यमावश्यकममित्यत आह—न चैवमिति। तद्वाक्यशेषेणेति। 'नेह नानास्ति किञ्चने' त्यधस्तनवाक्येनेत्यर्थः। अभेदपरो वाऽयमेकशब्द इत्याह—एकेति। तथापि प्रकृत्यर्थे प्रत्ययार्थवैशिष्ट्यमभ्युपेयमित्यत आह—अत एवेति। अवधारणस्य अन्या वाचो विमुञ्चथ इत्यस्य चैतन्यात्ममात्रानभिहितविषय-

निरस्तम्। वाक्यशेषादिविरोधात्। "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः। तमेवैकं जानथ आत्मानं अन्या वाचो विमुञ्चथेति यच्छब्द-निर्दिष्टात्मैव ज्ञातव्यः नान्य इति विशेषप्रतिपादनाच्च। द्युभ्वादिप्रपञ्चस्या-धेयस्य यच्छब्दार्थत्वाभावात्। नहि यस्मिन्नासने देवदत्तआ ते तदानयेति वाक्यं देवदत्तस्याप्यानयनं प्रतिपादयति। आधेयस्यापि ज्ञेयत्वे एव एकमिति पदद्वया-योगात्। अन्या वाचो विमुञ्चथेति वाक्यस्य निर्विषयत्वप्रसङ्गाच्च।

न चैवं द्वयानुपात्तानां तद्विषयत्वं, सत्यत्वादेरविज्ञेयत्वप्रसङ्गात्। नचान्यस्य स्वातन्त्र्येण ज्ञानं निषिध्यते न स्वरूपेणेति वाच्यम्। स्वातन्त्र्यवाचकपदाभावात्, तव मते नित्यस्य कालादेः कथमपि पराधीनत्वानुपपत्तेः। तद्वा एतद्ब्रह्माद्वयं बृहत्त्वादित्यद्वितीयत्वयोग्यस्य बृहत एव ब्रह्मशब्दार्थत्वाभिधानात्। तथा अन्यत्रापि "अथ कस्मादुच्यते परं ब्रह्मेति यस्मात् बृहति बृंहयतीति सर्वात्मत्वयोग्यं ब्रह्मशब्दो ऽर्थं दर्शयति। ब्रह्मशब्दस्य लक्ष्यमपि सर्वात्मत्वयोग्यकेवलचैतन्यमेव। तस्माद्द्वय-एवायमात्मा सन्मात्रो नित्यः शुद्ध इत्यादिश्रुतिरपि केवलं वाक्यार्थं दर्शयति। नापि प्रतिकूलतर्कपराहतिः। तत्र न तावत् यद्वाक्यं तत् संसर्गपरमिति नियमो बाधकः। अप्रयोजकतया नियमाभावात् प्रकृष्टप्रकाशादिवाक्ये व्यभिचाराच्च। न च पदार्थस्य वाक्यार्थत्वानुपपत्तिः वाक्यार्थब्रह्मणः पदशक्यत्वाभावात् पदलक्ष्यस्य च गोकर्मकानयनस्य वाक्यार्थत्वात्। पदविधया पदलक्ष्यस्यापि वाक्यतात्पर्य-विषयत्वे बाधकाभावाच्च। पदान्तरवैयर्थ्यं चात्रैवानन्तरं परिहरिष्यते।

---

त्वान्न वैयर्थ्यमित्याशङ्क्याह—न चैतद्वाक्येति। बृहति वर्धते बृंहयति वर्धयति परिणाम-यतीत्यर्थः। ततश्च संकोचकाभावात् निरवग्रहवृद्धिः सर्वात्मत्वयोग्यतैवेति ब्रह्मणः सर्वात्मकतयाऽखण्डत्वसिद्धिरित्याह—सर्वात्मत्वयोग्यमिति। सिद्धान्ते ब्रह्मपदस्य लाक्षणि-कत्वात् तस्य कथं निर्वचनादर्थसिद्धिरित्यत आह—ब्रह्मशब्दस्येति। निर्वचन-प्राप्तवृद्धिकर्तृत्वादिपरित्यज्य पूर्णचिन्मात्रमेव तेन लक्ष्यत इत्यर्थः। एवमखण्डार्थत्वानु-माने विपक्षे बाधकं प्रदर्श्य स्वपक्षे बाधकं निराकरोति—नापीति। ब्रह्मपदार्थस्यैतद्घटित-वाक्यार्थत्वे पदान्तरवैयर्थ्यापातात् तस्य वाक्यार्थत्वानुपपत्तिरेव बाधिकेत्या-शङ्क्याह—न च पदार्थस्येति। किं पदार्थपदेन शक्यं विवक्षितं उत लक्ष्यम्? आद्ये प्रकृते नानुपपत्तिरित्याह—वाक्यार्थेति। द्वितीयेऽपि किं पदलक्ष्यमात्रस्य न वाक्यार्थता, उत पदविधया तल्लक्ष्यस्य? नाद्यः सर्वत्र वाक्यार्थस्य पदलक्ष्यत्वोपपादनादित्याह—पदलक्ष्यस्येति। द्वितीयं निरस्यति—पदविधयेति। पदान्तरवैयर्थ्यमेव बाधकमित्युक्त-मित्याशङ्क्याह—पदान्तरे त। अनेकपदानामेकपदार्थपर्यवसाने वाक्यलक्षणायोगात् तत्त्वानुपपत्तिरिति चोदयति—अथेति। आकाङ्क्षादिस्वरूपं दर्शयन् प्रकृते तदभावात् वाक्यलक्षणाभावमाह—तथाहीति। अभिधानस्य किमिदं पर्यवसानमिति वीक्षायामाह—येनेति। येन विना यस्य पदस्य स्वार्थान्वयाननुभावकत्वं इत्यत्र तात्पर्यविषयान्वयाननु-भावकत्वमित्यपि वाच्यम् अन्यथा शुक्लां गामानयेत्यादौ शुक्लपदं विनेतरपदस्य-

अखण्डार्थत्वे शाब्दबोधकारणानामाकाङ्क्षादीनामनुपपत्तिशङ्का

अथैकार्थत्वे आकाङ्क्षाद्यभावात् वाक्यत्वानुपपत्तिः। तथाहि--अभिधानापर्यवसानमाकाङ्क्षा। येन विना यस्य पदस्य स्वार्थान्वयाननुभावकत्वं तदपर्यवसानम्। अन्वयबाधाभावो योग्यता। अन्वयप्रतियोग्युपस्थितिरासत्तिः। अभेदवाक्यार्थे च अन्वयाभावादाकाङ्क्षाद्यभावः इति।

अखण्डार्थाङ्गीकारेपि आकाङ्क्षाद्युपपत्तिनिरूपणम्

नैवम्। तात्पर्यगोचरस्यैवान्वयपदेन विवक्षितत्वात्। आसत्तिश्च पदार्थोपस्थितिः। न चैवमपि सत्यपदलक्ष्यतावन्मात्रस्य वाक्यार्थस्य पदान्तरं विनाऽननुभावकत्वं नास्तीति वाच्यम्। पदत्वेन स्मृतिहेतोः पदान्तरेण विनाऽनुभवाजनकत्वात्। तदाहुः पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते। इति। विनिगमकाभावाच्च। ज्ञानादिपदसमभिव्याहारं विना सत्यादिपदानामर्थविशेषे लक्षणाभावान्न वाक्यार्थलाभोऽपि। न च पदार्थे वाक्यस्य तात्पर्यं नास्तीति वाच्यम्। यतो न पदार्थातिरिक्तत्वं तात्पर्यगोचरत्वे प्रयोजकं वायोः क्षेपिष्ठत्वेन, विषस्य भक्षणेन संसर्गे तदभावात्। तत्कस्य हेतोः ? प्रयोजनवत एव प्रमाणशब्दतात्पर्य-

---

स्वार्थान्वयाननुभावकत्वाभावात् शुक्लपदेऽनाकाङ्क्षाप्रसंगात्। ततश्च लाघवात् यस्य पदस्य येन विना तात्पर्यगोचराननुभावकत्वं इत्येवाकाङ्क्षालक्षणं तथा तात्पर्यगोचरार्थाबाध एव योग्यता। तथा वाक्यार्थप्रतिपत्त्युपायपदार्थोपस्थितिरासत्तिरित्यखण्डपराणामप्याकाङ्क्षादिमत्त्वात् न वाक्यत्वविरोध इत्यभिप्रेत्याह—नैवमिति। सत्यादिपदस्य पदान्तरेण विना तात्पर्यार्थगोचराननुभावकत्वरूपाङ्क्षा नास्त्येव। तत्र एकैकपदलक्ष्यव्यतिरिक्तस्य तात्पर्यविषयस्याभावात् तल्लक्ष्यस्य पदान्तरं विना तेनैवानुभवसंभवात् इत्याशङ्क्य पदमात्रस्य स्मारकत्वात् पदान्तरं विनाऽननुभावकत्वात् नैवमित्याह—न चैवमित्यादिना। तर्हि सत्यं ब्रह्मेत्येतावतैवानुभवोपपत्तौ किमितरेणेत्यत आह—विनिगमकेति। ननु आकाङ्क्षालक्षणेऽननुभावकत्वं अज्ञापकत्वमेव ततश्चैकस्यैव पदस्य लक्षणया तात्पर्यविषयाऽर्थस्मारकत्वात् नाकाङ्क्षेत्याशङ्क्याह—ज्ञानादीति। एकैकपदप्रयोगे लक्षणैवानुपपन्ना। अनुपपत्तिप्रतिसन्धानाभावात् ज्ञानादिपदसमभिव्याहारं विना वाक्यार्थब्रह्मस्वरूपविशेषानवगमेन तस्य मुख्यार्थसंबन्धाप्रतीतेश्च। नाप्येकैकपदलक्ष्यावगमात् ज्ञानाद्यभेदसंशयादिनिवृत्तिः तत्र तस्य सत्तानवधारणात्मकत्वात्। न चानन्तपदादेव ज्ञानाद्यात्मत्वसिद्धेः नेतरापेक्षेति वाच्यम्। ज्ञानादेर्मिथ्यात्वेऽपि ब्रह्मानन्त्योपपत्तेः। अतो नैकैकपदात् वाक्यार्थब्रह्मसिद्धिरित्यर्थः।

ननु पदार्थस्य वाक्यतात्पर्यगोचरत्वमेवानुपपन्नम् येन तत्प्रतिपादने नान्यापेक्षा स्यात् इति नेत्याह—न चेति। किं पदार्थातिरिक्तत्वस्य तात्पर्यविषयत्वप्रयोजकत्वात् पदार्थे तात्पर्याभावः किं वा पदार्थत्वस्य तदभावप्रयोजकत्वात्? नाद्य इत्याह—यत

गोचरत्वात् । एवं पदार्थत्वमपि वाक्यतात्पर्याभावे न प्रयोजकं, वाक्यजन्यपदार्थज्ञानेन परमपुरुषार्थलाभे वाक्यार्थ इव तस्मिन्नप्युपक्रमादितात्पर्यस्यावश्यं वक्तव्यत्वात् । अस्ति चात्र सत्यादिवाक्यार्थज्ञानात् सत्याद्यात्मस्वरूपाज्ञाननिवृत्तिः । तेन विना ज्ञानानन्दादिभेदभ्रमानिवृत्तेः ।

एतेन अनुपपत्तिप्रतिसन्धानार्थं पदान्तरसमभिव्याहार इत्येतत् सह श्रुतपदानां बोधकत्वव्युत्पत्तिविरुद्धमिति निरस्तम् । घोषादिपदस्येवानुपपत्तिप्रतिसन्धानद्वारा बोधकत्वात् । अत एवाखण्डवाक्यार्थे न पदान्तरवैयर्थ्यम् । सत्यादिपदं विनाऽभिप्रेतब्रह्मस्वरूपासिद्धेः । वाच्यैकदेशस्यैव चैतन्यादेः घटोऽनित्य इत्यत्र घटस्येव लक्ष्यत्वात् ब्रह्मणः गङ्गापदलक्ष्यतीरस्यागङ्गात्ववत् नाप्रकाशाद्यात्मत्वम् ।

सत्यादिपदानां निर्विशेषपरत

एतेन ज्ञानादिपदैः सत्यपदवाच्यमेव बोध्यते अन्यद्वा ? आद्ये तद्वैयर्थ्यम् द्वितीये सविशेषता इत्यर्वाचीनवचनं निरस्तम् । यस्त्वखण्डवाक्यार्थस्य स्वप्रकाशत्वात् वेदान्तवाक्यं व्यर्थमित्यर्वाचीनप्रलापः स स्वप्रकाशेऽप्यविद्यासमर्थनेनासकृन्निरस्तः । विचारात् प्राक् वाक्यीयं प्रमाणज्ञानं सत्यज्ञानानन्दाद्वितीयब्रह्माभिन्नजीवस्वरूपगोचरमपि सत्तानिश्चयरूपं न भवतीति न विचारादिवैयर्थ्यम् ।

---

इति । तात्पर्यगोचरत्वप्रयोजकं दर्शयन् द्वितीयमपि निराकरोति—प्रयोजनवत इत्यादिना । प्रयोजनमपि संसर्गताज्ञानादेव भवति न पदार्थज्ञानादित्यत आह—अस्ति चेति । पदार्थज्ञानाधीनप्रयोजनस्य पदमात्रादेव संभवात् वाक्यं व्यर्थमित्याशङ्क्याह—तेन विनेति । पदान्तरेण विना लक्षणैव नावतरति । तस्यां प्रवृत्तायामपि एकैकस्मात् पदात् सत्यत्वादिविशिष्टवाचकात् तत्तद्विशेष्यमात्रमेव ज्ञायते । तावता च तदभेदाज्ञानसंशयाद्यनिवृत्तेः तन्निवर्तकज्ञानं वाक्यैकसाध्यमित्यर्थः । पदान्तरं विना लक्षणा नावतरतीत्यत्र परोक्तचोद्यमनूद्य निरस्यति—एतेनेति । एवं सत्यादिपदानां परस्पराकाङ्क्षोपपादनात् अन्यतरवैयर्थ्यशङ्का दूरनिरस्तेत्याह—अत एवेति ।

ब्रह्मणो ज्ञानादिपदलक्ष्यत्वे अज्ञानाद्यात्मत्वापात इत्येतत् भागत्यागलक्षणाभ्युपगमादेव निरस्तमित्याह—वाच्यैकदेशस्येति । लक्ष्यैक्यस्य वाक्यार्थत्वोक्तेः नवीनप्रलापोऽपि निरस्त इत्याह—एतेनेति । ज्ञानादिपदलक्ष्यैक्यस्यापि स्वप्रकाशत्वात् तत्र वाक्यमसदर्थमित्येतत् प्रागेव निरस्तमित्याह—यस्त्विति । वाक्योत्थाखण्डविषयकज्ञानस्य पुरुषार्थहेतुत्वे तस्य विचारात्प्रागेवोत्पत्तेः विचारादिवैयर्थ्यमित्यत आह—विचारादिति । वाक्यार्थे उद्देश्यविधेयभावनियमात् एकपदार्थमात्रे तदसंभवात् कथं तस्य वाक्यार्थत्वमिति चोद्यमनूद्य प्रसिद्धप्रसिद्धिमात्रापेक्षत्वादुद्देश्यत्वादेः तयोश्च कल्पितभेदेनाप्युपपत्तेः न विरोध इति परिहरति—यस्त्वित्यादिना । लक्ष्ये लक्षणानुपपत्तिरेव बाधिकेत्या-

अखण्डार्थत्वे वस्तुसिद्धिः (पू०)

यत्तु वाक्यार्थस्यैकत्वे उद्देश्यविधेयभावाभावात् ब्रह्मस्वरूपासिद्धिरिति। तन्न। यच्छिद्रं तत् खं इत्यादिवत् भेदभानदशायां यत् सत्ज्ञानमानन्दश्च तद्ब्रह्मेति तद्भावस्य सत्त्वात्। तावतैव ब्रह्मस्वरूपबुभुत्साशान्तेः संभवात्। न च सर्वपदेष्वेकस्मिन् वाक्ये ब्रह्मलक्षणानुपपत्तिः लाक्षणिकपदस्यान्यत्र अन्वयबोधजनकत्ववत् प्रकृतेप्यभेदबोधकत्वोपपत्तेः। न चान्यत्र सर्वपदलक्षणाऽदृष्टेति सा दुष्टा। एकपदलक्षणाया अप्यन्यत्रादर्शनात् गङ्गायां घोष इत्यत्राभावप्रसङ्गात्। अनुपपत्तिश्च तुल्या। विषंभुङ्क्ष्वेत्यत्र दृष्टत्वाच्च।

यस्त्वर्वाचीनः प्रकृतात् शत्रुगृहभोजनात् विषभक्षणस्येष्टसाधनत्वोक्त्या तद्भोजनस्यानिष्टसाधनताऽऽक्षिप्यते। न तु वाक्येनाकर्तव्यता लक्ष्यते। यद्वा तत्र विषशब्देन द्विषदन्नं लक्ष्यते विधिप्रत्ययेन च निषेधो लक्ष्यते भुजिधातुर्मुख्य एवेति न सर्वपदलक्षणा। अथवा अयमिदानीं मह्यं क्रुद्धः आप्तत्वे सति प्रमाणविरुद्धकर्तव्यताभिधायित्वात्। क्रोधश्चात्र सन्निहितभोजनादेव सन्निहितहेतुत्यागेनादृष्टकल्पनायोगात्। अतो न मयेदं कार्यमित्यनुमितिरेवात्र मानमिति।

विषंभुङ्क्ष्वेत्यादिषु सर्वपदलक्षणाखण्डनस्य दूषणम्

तदसत्। तत्र न तावत् आक्षेपात् भोजननिवृत्तिसिद्धिः आप्तोक्तत्वेन

---

शङ्क्य लक्षकस्याप्यनुभावकत्वोपपादनात् मैवमित्याह—न च सर्वेत्यादिना। सर्वपदलक्षणायाः अन्यत्राहृष्ट्या अननुभावकत्वात् सर्वपदानां लक्षकत्वे वाक्यार्थबोधानुपपत्तेः साऽनुपपन्नेत्याशङ्क्याह—न चान्यत्रेति। अन्यत्रादर्शनादिति। गङ्गायां घोष इत्यादौ गङ्गापदलक्षणाऽदर्शनादित्यर्थः। गङ्गायां घोषाधिकरणत्वानुपपत्त्या तस्य लक्षणाऽऽवश्यकी चेत् प्रकृतेपि अखण्डतात्पर्यानुपपत्त्या सर्वपदलक्षणाऽऽवश्यकीत्यभिप्रेत्याह—अनुपपत्तिश्चेति। मञ्चाः क्रोशन्तीत्यादौ एकपदलक्षणा दृष्टेत्याशङ्क्य तर्हि अनेकपदलक्षणापि दृष्टेत्याह—विषमिति। विषं भुंङ्क्ष्वेत्यत्रापि न सर्वपदलक्षणा तत्र विषभोजनस्यैवाभिधानात् अर्थादनुमानाद्वा शत्रुगृहभोजनेऽनिष्टसाधनताप्रमितेः तस्याः शाब्दत्वेऽपि भुङ्क्ष्वेत्यत्र प्रकृतिर्मुख्यैवेति नवीनोक्तमनूद्यापवदति—यस्त्वित्यादिना।

किं वाक्यस्य विशिष्टार्थपरत्वाभावबोधदशायां आक्षेपः, तत्परत्वबोधदशायां वा? नाद्यः आप्तवाक्यत्वेन निश्चिते नैरर्थक्यबुद्ध्यनुदयादित्याह—आप्तोक्तत्वेनेति। तद्बुद्धिमभ्युपेत्याप्याह—तत इति। न हि शुकादिवाक्यतुल्यतया ज्ञाताद्वाक्यादाक्षेपावतार इत्यर्थः। नन्वाप्तस्य सतः प्रमाणविरुद्धार्थोक्त्यन्यथानुपपत्त्यैवार्थान्तरं कल्प्यते। शुकादिवाक्यं तु नैवमित्याशङ्क्य लक्षणाबीजानुपपत्त्यैव अर्थान्तरसिद्धौ गङ्गायां घोष इत्यादा-

प्रतिसन्धीयमानस्य वाक्यस्य नैरर्थक्यज्ञानायोगात् । अत आक्षेपायोगाच्च लक्षणामात्रस्योच्छेदप्रसङ्गाच्च । सार्थकत्वज्ञानदशायां प्रतीयमानार्थबाधात् लक्षणैव वक्तव्या । नापि भुजिर्मुख्यः । शत्रुगृहे जलमपि न पेयमित्यभिप्रायेण हि विषं भुङ्क्ष्वेति प्रयुज्यते । तत्र कथं धातुर्मुख्यार्थः भक्षणपानयोर्भेदात् हेतुरप्यसङ्गतः, वाक्यश्रवणेऽपि हि नियमेन व्याप्त्यादिप्रतिसन्धानकल्पने जितं वैशेषिकेन । न वा लक्षणामात्रं सिध्यति । कथञ्चिदनुमानसंभवात् । तस्माद्वाक्यमेव सर्वपदलक्षणया शत्रुगृहभोजनादि वारयतीति श्लिष्टम् । सर्वपदलक्षणायां पदद्वयलक्षणायामिव बाधकाभावेन न सर्वपदलक्षणेति त्वत्प्रक्रियाया उपेक्ष्यत्वात् । वायुर्वै क्षेपिष्ठेति वाक्यस्य प्राशस्त्यलक्षकत्वाच्च ।

एतेन सत्यादिवाक्यस्थसर्वपदानां लक्षकत्वे ब्रह्मणो भेदे कथमनन्तशब्दविरोध उद्भाव्यते । न च लाक्षणिकमप्यनन्तपदं भेदेन विरुध्यते । कथं वा ब्रह्मणः सत्यज्ञानाद्यात्मत्वे इयं श्रुतिरुपन्यस्यते । नहि सत्यादिपदलक्ष्यस्य सत्याद्यात्मत्वमिति नवीनोक्तं निरस्तम् ।

आनन्दाद्यात्मब्रह्मैव हि सत्यज्ञानादिपदैर्लक्षणया प्रतिपाद्यत इत्यसकृदुक्तमिति भवति तद्वाक्यं प्रमाणम् । लक्षणाबीजं च तात्पर्यानुपपत्तिरित्युक्तम् । एतदेव वाक्यस्य प्रामाण्यानुपपत्तिर्लक्षणाबीजमित्याचार्यवचनादवगम्यते । अबाधितार्थ-

---

वपि तथैव तीरादिसंसर्गसिद्धेः हतेयं त्वन्मतलक्षणातपस्विनीत्याह—लक्षणेति । द्वितीये आह—सार्थकत्वेति । शाब्दत्वेऽपि भुजिधातुः मुख्येत्युक्तं निरस्यति—नापीति । पानादावपि भुजिधातुर्मुख्य इत्यत आह—भक्षणेति । पानभोजनलेहनचोषणानामसांकर्येण लोके सिद्धत्वात् भुजिधातोः न पानादौ शक्तिरित्यर्थः । अनुमानात् विषवदन्नस्याभोज्यताप्रतीतिरिति पक्षं निरस्यति—हेतुरपीति । जितं वैशेषिकेणेति । विषवाक्यवदेव सर्ववाक्यानामपि जिज्ञासितार्थोपस्थापनेनान्यथासिद्धेः व्याप्तहेतुबलादेव वाक्यार्थप्रतीतिसिद्धेः शब्दस्य पृथक्प्रामाण्यायोगाच्चेति भावः । आप्तस्य प्रमाणान्तरविरुद्धोक्त्यनुपपत्तेः लक्षणाबीजत्वात् ततस्तामपहायार्थान्तरानुमाने न क्वापि लक्षणा सिद्ध्येदित्याह—न वेति । दृष्टान्तसमर्थनमुपसंहरति—तस्मादिति ।

किञ्च अनेकपदलक्षणाया अन्यत्रादर्शनेऽपि पदैः विषवाक्यादावभ्युपगमात् अन्यत्रादृष्टापि सर्वपदलक्षणा सति कल्पकेऽभ्युपेयेत्याह—सर्वपदेति । भट्टमते वाक्येपि लक्षणाऽभ्युपेतेत्याह—वायुरिति । सत्यादिवाक्यलक्षणायाः परोक्तानुपपत्त्यन्तरमप्युक्तविधया निरस्तमित्याह—एतेनेति । तथापि मुख्यार्थान्वयानुपपत्त्यभावात् कथं सर्वपदलक्षणेत्यत्राह—लक्षणाबीजं चेति । प्रामाण्यानुपपत्तिर्लक्षणाबीजमिति सिद्धान्तविद्वचनविरुद्धमित्याशङ्क्याह—एतदेवेति । सत्त्वादिति । विषस्यापि भुक्तिकर्मत्वयोग्यतया बाधा-

कत्वमात्रप्रामाण्यस्य विषं भुङ्क्ष्वेत्यादावपि सत्त्वात् । तात्पर्यविषयीभूते प्रामाण्यानुपपत्तिस्तु तात्पर्यानुपपत्तिरेव । तस्मात् पदार्थशोधकवाक्यमखण्डार्थनिष्ठम् ।

सगुणवाक्यं तु संसर्गनिष्ठं, तेन विनोपासनासिद्धेः तस्यापि परमतात्पर्यं ब्रह्मण्येव ब्रह्मसाक्षात्कारादन्यत्र परमपुरुषार्थासिद्धेरिति ।

तत्त्व मादिवाक्यानामखण्डार्थतानि०

एवं तत्त्वमादिवाक्यमप्यखण्डार्थम् अकार्यकारणद्रव्यविषयसमानाधिकरणवाक्यत्वात् सोऽयं देवदत्त इति वाक्यवत् । औपाधिकभेदवत्पदार्थसमानाधिकरणवाक्यत्वाद्वा महत्खं कुंभखं इतिवाक्यवत् । न चासिद्धिः, जीवपरयोः कार्यकारणत्वाभावात् गुणाद्यतिरिक्तत्वाच्च । नापि तयोः स्वाभाविको भेद इत्युक्तम् । नापि विरोधः साध्याभावव्याप्यत्वस्याभावात् । नाप्यनैकान्तिकः विपक्षावृत्तेः । नापि वाक्यत्वादिना सत्प्रतिपक्षता, अप्रयोजकत्वात्तस्य । प्रकृष्टप्रकाशादिवाक्ये व्यभिचाराच्च । नापि बाधः, जीवपराभेदस्य निरूपितत्वात् । नापि दृष्टान्तस्य साध्यवैकल्यम् । तदेतत्पदद्वयलक्षितदेवदत्तैक्यस्य तेन प्रतिपादनात् । तथाहि--न तावत् तद्देशकालविशिष्टस्यैतद्देशवैशिष्ट्यं वाक्येन प्रतिपाद्यते, किन्तु

---

भावादित्यर्थः । परमप्रकृतमुपसंहरति--तस्मादिति । ननु सत्यकामः सत्यसंकल्प इत्यादीनां तत्तत्पदार्थविषयाणां लक्षणयाऽखण्डपरत्वे उपासनाविधिवैयर्थ्यमित्याशङ्क्य तत्रावान्तरतात्पर्यात् न विरोध इत्याह--सगुणेति ।

इदानीं सर्वशेषिभूतमहावाक्यानामप्यखण्डार्थत्वं साधयति--एवमिति । परस्परं कार्यकारणभावरहिते ये द्रव्ये तद्विषयसमानाधिकरणवाक्यत्वादित्यर्थः मृद्घटः नीलमुत्पलं राज्ञः पुरुष इत्यादिवाक्येषु व्यभिचारवारणाय यथाक्रमं विशेषणानि । हेत्वन्तरमाह--औपाधिकेति । औपाधिकभेदवन्तौ यौ पदार्थौ तद्विषयसमानाधिकरणवाक्यत्वादित्यर्थः । अत्र घटाकाशः शरावावच्छिन्नवाक्याद्भिद्यते इति वाक्ये व्यभिचारवारणाय सामानाधिकरण्यपदम् । पूर्वोपपादितपर्यालोचनयाऽत्रासिद्धिः स्यादिति शङ्कानवकाश इत्याह--न चासिद्धिरित्यादिना । न च प्रत्यग्ब्रह्मणोरभेदेन द्वित्वाभावादसिद्धिरिति वाच्यम् । कल्पितभेदादपि द्वित्वोपपत्तेः । अत एव न साधनवैकल्यमपीति भावः । सोऽयमित्यत्र तत्तादिवैशिष्ट्यप्रतीतेः साध्यवैकल्यमित्याशङ्क्याह--नापि दृष्टान्तस्येति । मुख्यार्थान्वयेऽनुपपत्त्यभावात् न तदेतत्पदयोः लक्षणेत्याशङ्क्याह--तथाहीति । किं तद्देशकालविशिष्टानुवादेन तस्यैतद्देशादिवैशिष्ट्यं प्रतिपाद्यते, उत एतद्देशादिविशिष्टस्य तद्देशादिवैशिष्ट्यं, किं वा तदेतद्देशकालादिविशिष्टयोरभेदः अथवा तत्कालोपलक्षितस्यैतत्कालादिविशिष्टाभेदः आहो एतत्कालोपलक्षितस्य तत्कालविशिष्टाभेदः इति विकल्पानभिप्रेत्य क्रमेण दूषयति--न तावदित्यादिना । तद्देशकालप्रसंगादिति ।

तत्तादेरतीतत्वेऽपि यदन्विततया ज्ञात एव तात्पर्यविषयीभूतेतरान्वयधीः तद्विशेषणं इत्येवंरूपस्य विशेषणत्वस्य संभवात्। न च विधेयान्वयि विशेषणं शब्दो नित्य इत्यादौ शब्दत्वादावव्याप्तेः। नापि विधेयान्वयकाले सदेव विशेषणं 'दण्डी भविष्यति' दण्ड इतः अस्तीत्यादावव्याप्तेः। नापि विधेयान्वयप्रतियोगितावच्छेदकं प्रत्याय्य व्यावृत्त्यधिकरणतावच्छेदकं वा अवच्छेदकत्वस्यान्यूनानधितिरिक्तदेशकालत्वरूपत्वे तस्य सास्नादिमान् गोरित्यादिलक्ष्यतावच्छेदकरूपविशेषणेषु सत्त्वेऽपि गौःशुक्ल इत्यादावव्याप्तिः यद्वत्तया ज्ञात एव वदत्वमधीः तत्वं चेदवच्छेदकत्वं तदिहाप्यस्ति। नहि तत्तावत्त्वेनाज्ञाते इदन्त्वधीः अनिदंव्यावृत्तधीर्वा। तस्मादतीतमपि यदन्विततयाज्ञात एवेत्याद्युक्तलक्षणमयुक्तं चेत् विशेषणमेव तदयुक्तं चेत् वर्तमानमपि अविशेषणमेवेति।

सोऽयंदेवदत्त इत्यादिरथंः

**उच्यते—सोऽयमिति पदद्वयं तत्तेदन्ते एकवृत्ती इति बोधयति, उत सोऽयमित्येव प्रतीत्याकारः, वाक्यतात्पर्यमेकवृत्तित्व इति। नाद्यः, तयोः पदार्थोपसर्जन-**

---

अन्यथा तत्कालादिविशिष्टे एतत्कालादिवैशिष्ट्यायोगादिति भावः एवमुत्तरत्रापि द्रष्टव्यम्। कल्पद्वयेऽपि साधारणं दोषमाह—समानाधिकरण्येति। किञ्चिद्विशिष्टे किञ्चिद्वैशिष्ट्यमात्रविधाने गवानयनादिवाक्यवत् वैयधिकरण्यं स्यात्। अतः सामानाधिकरण्यादभेदपरत्वमास्थेयमित्यर्थः। विशिष्टयोरभेदोऽप्यसंभवीत्याह—विशिष्टस्येति। तद्भेदादिति। तयोर्विशिष्टयोर्भेदादित्यर्थः। न चाद्यपक्षे विशेष्यमात्रस्याभेदोऽस्तीति वाच्यम्। तथापि विशिष्टवाचकपदाभ्यां लक्षणां विना तन्मात्राभेदबोधायोगात्। नहि पदार्थैकदेशेन पदार्थैकदेशस्य वाक्यादन्वयी भवतीति भावः। पञ्चमं निरस्यति—अतएवेति। इदानी तत्कालाभेदप्रसङ्गादेवेत्यर्थः। फलितमाह—तस्मादिति। नवीनप्रलापनिरासेन उक्तं द्रढयितुमनुवदति यस्त्वित्यादिना। नत्वित्यस्याखण्डार्थत्वमित्यनेनान्वयः तदन्वयस्तेन विशिष्टेनान्वयः, तत्तेदन्तयोः असमानकालीनत्वेऽपि तद्विशिष्टयोरैक्यं संभवतीति वक्तुं तयोर्विशेषणत्वमुपपादयति—किञ्चेत्यादिना। दण्डी-भविष्यतीत्यादिना प्रागभावादेर्विधेयत्वात् तत्समये दण्डाभावादव्याप्तिरित्यर्थः। प्रत्याय्या—प्रत्याययितव्या या व्यावृत्तिः इतरभेदः तदधिकरणतावच्छेदकं वा विशेषणं नेत्यन्वयः। गौः शुक्ल इत्यादिष्विति। तत्र शौक्ल्यस्य गौत्वान्यूनानधिकदेशादिमत्वाभावादित्यर्थः। वर्तमानमपीति। दण्डादिकमित्यर्थः। विकल्पासहत्वान्नैतदपीत्याह—उच्यत इत्यादिना। वाक्यतात्पर्यमित्यपि द्वितीयशेषमेव। सिद्धान्तवैलक्षण्यायोक्तं पदार्थोपरञ्जतयेति। तदिदंशब्दयोः तत्तादिविशिष्टे सामर्थ्यग्रहात् ताभ्यां तत्तादेःप्राधा-

तयोपस्थितत्वात् । एकत्वरूपाभेदस्य वाक्याद्न्येनानुपस्थितेः । वाक्यादेव तत्सिद्धौ वाक्यमखण्डार्थनिष्ठमेव । न च तत्तेदन्ते देवदत्तवृत्ती इति प्रतिपादयतीति वाच्यम् । वाक्याद्भेदभ्रमानिवृत्तिप्रसङ्गात् । वृत्तिपदाभावाच्च । द्वितीये यदि तात्पर्यकल्पनं लाघवेन विशेषणीभूताभेद एव तदस्तु ।

तस्याभेदपरता

अपि च समानाधिकरणवाक्यतयाऽभेद एव तात्पर्यम् । तत्र च विशिष्टाभेदे विशेषणयोरप्यन्वयो वाच्यः । पदार्थैकदेशेऽन्वयाव्युत्पत्तेः विशेषणयोश्चाभेदाभावे तदवच्छेदकतया नीलगुणोत्पलयोरिव वाच्यः अवच्छेदकत्वं च अवच्छेद्यान्यूनकालीनत्वमेव ।

ननु यद्वत्तया ज्ञात एव यदन्वयधीस्तत्वं; उपलक्षणस्याप्यवच्छेदकत्वे विशेषणत्वप्रसङ्गात् । न हि काकवत्ताज्ञानं विना काकवद्देवदत्तगृहमितिधीर्भवति । न वा तत्संशयादिनिवृत्तिःतच्चावच्छेदकत्वं न तत्तेदन्तयोरस्ति तयोरभेदात् पूर्व-

---

म्येनो पस्थित्यसंभवेन तद्विशेष्यान्वयबोधायोगात् । अतः तत्तेदन्तयोः प्राधान्येनोपस्थित्यर्थं त्वयापिपदद्वयलक्षणा वाच्येति भावः । अस्तु पदद्वयलक्षणा तथापि तत्तादेरेकवृत्तित्वबोधनान्नाखण्डार्थतेत्याशङ्क्याह---एकत्वरूपेति । तत्तेदन्ताद्याश्रयभेदबोधाभावात् तत्तदन्ते एकाश्रिते इतिधीर्न स्यादित्यर्थः । वाक्यमेव तदाश्रयाभेदं प्रतिपाद्य तयोसन्निष्ठतामपि बोधयतीत्याशङ्क्याह—वाक्यादेवेति । शब्दस्य विरम्य व्यापारायोगात् तत्तेदन्ताश्रयत्वस्याभिन्नयोरेव सिद्धत्वाच्च तदैक्य एव वाक्यपर्यवसानं न विशिष्टपरतेत्यर्थः ।

अभेदवाचकपदाभावेपि देवदत्तपदश्रवणात् तद्वृत्तित्वं तत्तादेर्बोध्यत इत्याशङ्क्याह—न च तत्तेति । भेदभ्रमानिवृत्तिप्रसंगादिति । देवदत्तद्वयाश्रितत्वेऽपि तदुपपत्तेरित्यर्थः । द्वितीये तात्पर्यमेकवृत्तित्व इत्यत्र एकपदेन भिन्नाभिन्नविशिष्टाकारो विवक्षितः उत अभिन्नविशेष्यमात्रं, आद्ये स्वविशिष्टे स्ववृत्तेर्बाधितत्वेन तत्र तात्पर्यायोगादित्यभिप्रेत्य द्वितीये पदद्वयलक्षणां विना विशेष्यमात्राभेदप्रतीत्ययोगात् सा आवश्यिकी ततश्च लाघवादायातोविशेष्याभेद एव तात्पर्यं प्रत्याय्यम् । न तु तत्तादेः तदवृत्तित्वेऽपि गौरवात् तस्यार्थिकत्वाच्चेत्याह—द्वितीय इति । विशेषणीभूतेति । एकवृत्तित्व इत्यत्र एकपदोपात्तविशेषणीभूताभेद इत्यर्थः । परोक्तविशिष्टाभेदमपि दूषयितुमाह—अपि चेत्यादिना । अवच्छेद्यान्यूनकालीनत्वमिति । शौक्ल्यस्यापि यावद्द्रव्यभावित्वेन गोपिण्डावच्छेदकत्वात् न तत्राव्याप्तिरिति भावः । उपलक्षणेऽपि परोक्तविशेषणलक्षणानुगतिं दर्शयति—न हीति । विशिष्टान्वयासंभवफलमाह—अत इति । विशेष्याभेदमात्रस्यान्यतोऽवगमात् तत्र वाक्यं व्यर्थमित्याशङ्क्य भेदोपाधिपरामर्शपूर्वकं पूर्वमभेदेनानधिगतेः ततस्संशयाद्यनिवृत्तेः तन्निवर्तनसमर्थं ज्ञानं वाक्यैकसाध्य-

कालीनत्वाभावात्। अतो लक्षणयाऽभेदमात्रं वाक्यार्थ इत्यखण्डार्थता। अभेदश्च न संसर्ग इत्युक्तम्। पदार्थानधिकविषयत्वेऽपि वाक्यस्य वर्णितरीत्या तत्र सत्ता-निश्चयरूपा धीः भेदभ्रमनिवृत्तिश्चोपपद्यते। एवं च यत्र धर्मस्य नाभेदावच्छेदकत्वं तत्र सर्वत्रापि न विशिष्टाभेदः। न चैवं सामानाधिकरण्यविरोधः भिन्नप्रवृत्ति-निमित्तानामेकवृत्तित्वस्य अखण्डार्थत्वेऽप्यनपायात् प्रत्युत तत्रैव तन्मुख्यम्। अन्य-त्राभेदस्यैकपदार्थरूपस्य मुख्यस्यासंभवात्।

यत्तु नवीनोक्तम्--यद्यपि विशिष्टं पदार्थान्तरमित्यावयोर्मते सम्यं तथापि धूमाग्न्योर्भेदेऽपि धूमवानग्निमानिति सामानाधिकरण्यधीबलेन विशिष्टयोरभेदो ऽप्यस्तीति।

सत्यं विशिष्टं विशेष्यादन्यदेव अन्यथा देवदत्तोऽयमिदानीं दण्डी न भवतीति प्रतीतिविरोधात्। न च सा दण्डाभावविषयैव। तदन्योन्याभावस्य तद्विषयत्वे तद्विशिष्टकालेऽपि तद्धीप्रसङ्गात्। अत्यन्ताभावस्य भेदबुद्ध्य-विषयत्वात्। कदाचित् दण्डसंबन्धाश्रये तव तदत्यन्ताभावायोगाच्च। कालभेदेन एकस्मिन् तयोरविरोध इति चेन्न। तदाप्याश्रयभेदाभावे तदयोगात्। तद्भेदा-भ्युपगमे चागतमेव विशिष्टस्यान्यत्वम्।

---

मिति न वाक्यं व्यर्थमित्याह—पदार्थानधिकेति। न चैवं दण्ड्ययमित्यादावपि विशिष्टा-भेदो न स्यादित्याशङ्क्येष्टापत्तिमाह--एवंचेति। अन्यत्रेति। तत्तादिविशिष्टाभिधाने तयोर्भेदान्नैकत्वमित्यर्थः।

विशिष्टयोरभेदस्यापि संभवान्नाखण्डार्थत्वमिति परोक्तमनुवदति—यत्त्विति। स्वरूपेणैवाभेदो न विशिष्टाकारेणेति वक्तुं तेन रूपेण भेदं साधयति—सत्यमित्यादिना। तद्विशिष्टकालेऽपीति। देवदत्ते दण्डवैशिष्ट्यसमयेऽपि तस्मिन् दण्डान्योन्याभावसत्त्वात् अयं न दण्डीति धीः स्यादित्यर्थः। भेदबुद्ध्यविषयत्वादिति। अयं 'अमुको न' इति बुद्ध्य-विषयत्वादित्यर्थः। आश्रयभेदाभाव इति। अभावाधिकरणयोः स्वरूपस्यैव संबन्धत्वात्। प्रतियोगिभेदाभावे बाधकान्तरमाह—एवमिति। तद्वति विशेष्याश्रये तदभावः विशिष्टाभावः। अभावस्य प्रतियोगितावच्छेदकावच्छिन्नेन विरोधः न प्रतियोगिमात्रे-णेत्याशङ्क्य गौरवान्मैवमित्याह--न च तदेति। प्रतियोगिमात्रस्य विशिष्टप्रतियोग्य-नन्यत्वे उक्तव्यवस्थाऽसंभवश्चेत्याह--विशेष्येति।

कथं तर्हि देवदत्ते दण्ड्यभेदधीरित्यत आह--स चेति। अत एवेति। विशिष्ट-स्वरूपयोरभेदस्यापि संभवात् तदात्मना धूमाग्निविशिष्टोरप्यभेदेन संभवादित्यर्थः। नन्वेवं सोऽयं देवदत्त इत्यत्रापि धूमवानग्निमानितिवदन्वयः किं न स्यादिति नेत्याह— तथापीति। वस्तुतस्तु धूमवान् अग्निमानित्यादावपि धूमादेरुपाधित्वमेव न तु

एवं दण्डी नास्तीति प्रतीयमानोऽभावो यदि देवदत्तप्रतियोगिकस्तर्हि कथं तद्वति तदभावः स्यात्। अत्यन्ताभावप्रतियोगिनोरेकदा एकत्र विरोधात्। न च तदा तत्प्रतियोगितावच्छेदकावच्छिन्नो नास्तीति वाच्यम्। अभावस्य प्रतियोगिना सहैव विरोधात्। विशेष्यस्य विशिष्टानन्यत्वपक्षे त्वदुक्तव्यवस्थायोगाच्च।

स च विशिष्टभेदः तस्य स्वरूपाभेदाविरोधो तस्यानिर्वचनीयत्वात्। अतएव स एवायमिति प्रतीतिः न विरुद्धयते। अतएव धूमवान् वह्निमानित्यभेदप्रत्ययोऽपि अस्मन्मतेऽविरुद्धः। परस्य तु कथमपि न सम्भवति। भेदाभेदस्य निरस्तत्वात्। तथापि प्रकृते न संभवति विशेषणयोरभेदावच्छेदकतया धूमाग्न्योरिवान्वयासंभवात्। तस्माल्लक्षणवाक्यमखण्डार्थमिति न साध्यवैकल्यम्।

तत्त्वं तु क्रियानन्वयि प्रत्याय्यव्यावृत्त्ययूनकालीनमुपाधिरेव न विशेषणम्। विशेषणं तु व्यावर्तकं क्रियान्वयि। न चोपाधिविशेषणयोरभेद एव लक्षणभेदस्य सत्त्वात्। तत्र व्यावर्तकं प्रत्याय्यव्यावृत्तिभिन्नकालीनमुपलक्षणम्।

प्रतिकूलतर्कनिराकरणम्

नन्वस्ति प्रतिकूलतर्कबाधः। तत्त्वमसिवाक्यस्याखण्डार्थत्वे पदार्थद्वयशोधकवाक्यैरेवावगतार्थत्वेन वैयर्थ्यप्रसङ्गात्। न च भेदभ्रमस्तेनानिवृत्त इति वाच्यम्। अद्वितीयब्रह्मस्वरूपनिश्चये तदयोगात्। अनिश्चये त्ववान्तरवाक्यस्यैव विचार्यत्वात्। पदार्थनिश्चयाभावे महावाक्यस्यार्थाबोधकत्वाच्च। न च जीवस्वरूपस्य घटादिवत् बाध्यत्वेऽपि तदद्वितीयत्वं सिद्धचतीति वाच्यम्। योऽयं विज्ञानमय इत्यादिवाक्यात् तस्य चिद्रूपतया निश्चितत्वेन तदभेदेनैव ब्रह्मणोऽद्वितीयत्वनिश्चयात्। ब्रह्मणि परोक्षत्वादिभ्रमनिवृत्तेरपि तत एव संभवादिति।

---

विशेषणत्वमित्यभिप्रेत्योपाधिविशेषणोपलक्षणानां स्वरूपमाह—तत्वं त्वित्यादिना। क्रियानन्वयीति। विधेयानन्वयीत्यर्थः उपलक्षणव्यावृत्तये उत्तरविशेषणम्, विशेषणलक्षणे विशेष्यव्यावृत्तये व्यावर्तकमित्युक्तम्। उपलक्षणव्यावृत्तये क्रियान्वयीति। उपलक्षणलक्षणे यस्य कस्यचिदागन्तुकस्य उपलक्षणतावारणाय व्यावर्तकमित्युक्तम्। उपाध्यादिनिवृत्तये इतरदिति द्रष्टव्यम्।

महावाक्यानामखण्डार्थत्वे बाधकान्तरं चोदयति--नन्विति। पदार्थशोधकवाक्योत्थज्ञानेन जीवपरभेदभ्रमानिवृत्तेः महावाक्यमर्थवदित्याशङ्क्याह—न चेति। तदयोगादिति। भेदभ्रमायोगादित्यर्थः। ब्रह्मणोऽद्वितीयत्वं वास्तवभेदाभावादेवोपपद्यते। स च जीवस्य बाध्यत्वेऽपि संभवतीत्याशङ्क्य त्वंपदार्थशोधकवाक्यपर्यालोचनया जीवस्याबाध्यत्वनिश्चयान्मैवमित्याह--न च जीवेत्यादिना। तत एवेति। जीवाभेदेनाद्वितीयत्वनिश्चयादेवेत्यर्थः। जीवपराभेदसाधकयुक्तीनां महावाक्याङ्गत्वेन तेन विना नावान्तरवाक्यमात्रात् अभेदसिद्धिरित्यभिप्रेत्य परिहरति--मैवमित्यादिना।

नैवम्। अद्वैतवाक्याद्धि ब्रह्मणो जीवाभेदो न सिद्ध्यति घटादेरिव जीवस्वरूपस्योपमर्देनापि तन्निश्चयसंभवात्। न च निष्प्रपञ्चस्वप्रकाशात्मना निर्णीतजीवस्वरूपस्य बाधो न संभवतीति वाच्यम्। तन्निर्णायकवाक्यस्य महावाक्यशेषत्वेन तेन विना तदसिद्धेः।

तथाहि --न तावदद्वैतार्थसिद्धये तन्निर्णयः; तस्योक्तविधयाऽन्यथापि संभवात्। नापि निष्प्रपञ्चस्वप्रकाशात्मतत्त्वं स्वत एव प्रतिपाद्यम् उपयोगाभावात्। प्रयोजनस्य ब्रह्मविदाप्नोति परं तरति शोकमात्मविदिति श्रुतिद्वयपर्यालोचनया निष्प्रपञ्चात्मब्रह्माभेदनिश्चयाधीनत्वात्। वाक्यद्वयस्य स्वस्वार्थे पर्यवसन्नत्वेन ततस्तदभेदासिद्धेश्च। अतो महावाक्यमेव अभेदयोग्यतासिद्ध्यर्थं निष्प्रपञ्चात्मतत्त्वमपेक्षत इति तन्निर्णायकवाक्यं महावाक्यशेषमेव। न च जीवस्वरूपस्य बाधे बन्धमोक्षयोर्वैयधिकरण्यं स्यादिति तस्य मुक्तिकालीनत्वे निर्णीते अद्वैतश्रुत्या तदभेदः सिद्ध्यतीति वाच्यम्। जीवस्वरूपविषयाणां न्यायानां तद्विषयवाक्यशेषतयाऽतच्छेषत्वात्।

एवं सत्यादिवाक्यमपि महावाक्यशेषमेव तावन्मात्रात् पुरुषार्थासिद्धेः। तस्योदाहृतश्रुतिद्वयपर्यालोचनया प्रत्यगभिन्नब्रह्मज्ञानाधीनत्वात्। तदभेदस्य महावाक्यं विनाऽप्राप्तेः। महावाक्यं विना जीवपरभेदश्रुतिविरोधेनाद्वैतवाक्यस्य निरङ्कुशाद्वैततात्पर्यकल्पनायोगाच्च।

---

अशनायादिराहित्यं निष्प्रपञ्चपदार्थः। तदसिद्धेरिति। त्वंपदार्थस्वरूपविशेषनिर्णयासिद्धेरित्यर्थः। स्वत एवेति स्वातन्त्र्येणैव पुरुषार्थहेतुत्वेनेत्यर्थः।

तरति शोकमात्मविदिति श्रवणात् अनुपयोगोऽसिद्ध इत्याशङ्क्याह--प्रयोजनस्येति। फलजनकं प्रतिपन्नाभेदज्ञानं परस्परैकवाक्यतापन्नावान्तरवाक्याभ्यामेव भविष्यतीत्याशङ्क्याह--वाक्यद्वयस्येति। एकैकस्वार्थमात्रे पर्यवसन्नाभिधानत्वेनेतराकाङ्क्षाभावात् तेनैकवाक्यतानुपपत्तेः न रक्तपटन्यायात् एकवाक्यता। तद्विशेषणविशेष्याद्यभावात्। न हि घटो भवति पटो भवति इति वाक्ययोरपि रक्तपटन्यायादेकवाक्यता भवति तद्वत्। न चैकप्रयोजनवशात् परस्परान्वयइतिवाच्यम्। प्रयोजनस्याभेदबोधायत्ततया तद्धेतुवाक्यशेषतया प्रयोजनपर्यवसायित्वसंभवेन परस्परान्वयकल्पनाऽयोगः। नहि वह्निरस्ति वायुरस्तीति वाक्ययोः प्रयोजनवशादेकवाक्यता दृष्टेति भावः। त्वंपदार्थनिर्णयस्य स्वत उपयोगाभावसाधनफलमाह--अत इति। एवमपि जीवस्वरूपविषयन्यायानुगृहीताद्वैतवाक्यादेवाभेदबोधसिद्धेः किं महावाक्येनेत्याशङ्क्याह---न च जीवेति। तद्विषयवाक्येति। जीवस्वरूपविषयकं यद्वाक्यं योयं विज्ञानमयः (प्राणेषु) इत्यादि तच्छेषतया तत्पदार्थवाक्यशेषत्वादित्यर्थः। तत्पदार्थमात्रज्ञानादपि प्रयोजनाभावात् तद्वाक्यमपि महावाक्याङ्गमित्याह---एवमित्यादिना। ब्रह्मविदाप्नोतिपरं तरतिशोकमात्मवित् श्रुतिद्वयपदेनोच्यते।

ननु भेदश्रुतेरनुवादत्वान्न स्वार्थतात्पर्यम् 'नान्योऽतोऽस्ति' इति श्रुतिश्च जीवपरभेदं निषेधतीत्युक्तम् । सत्यं । जीवपरभेदनिषेधश्रुतिन्याययोस्तदभेदप्रमापकवाक्यशेषत्वात् । अन्यथा सामान्यतो हितसाधनताबोधकोत्पत्तिविधेरेवार्थवादोपस्थापितस्वर्गमादाय पर्यवसानसंभवात् अधिकारविधिमात्रं निरर्थकं स्यात् तत्रचैदंपर्यभेदे प्रक्लृतेऽपि तथेत्यलमनया चर्चया । तदुक्तं भगवता नारदेन ।

तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम् ।
ज्ञाने त्वनाहते सिद्धे सर्वं ब्रह्ममयं भवेत् ॥ इति ।

अत एवैतस्य स्वर्गकामाधिकारवाक्यस्येव महावाक्यत्वम् । नाप्यप्रयोजकत्वं एकधैवानुद्रष्टव्यमित्याद्यखण्डार्थतात्पर्यग्राहकश्रुतिविरोधप्रसङ्गस्य विपक्षे बाधकतर्कस्य सत्त्वात् । चैतन्यातिरिक्तस्य मिथ्यात्वेन शास्त्रप्रतिपाद्यत्वायोगाच्च । किञ्चाखण्डार्थत्वाभावे वाक्यं निर्विषयं स्यात् । समानाधिकरणवाक्यस्य तादात्म्यातिरिक्तसंसर्गबोधेऽसमर्थत्वात् । जीवपरयोश्च गुणगुण्यादिवत् भिन्नत्वे सति अभिन्नसत्ताकत्वलक्षणतादात्म्यस्य भेदमिथ्यात्वं विनाऽसम्भवात् । मिथ्याभेदस्य प्रमाणशास्त्राप्रतिपाद्यत्वात् । जीवपरयोः गुणगुण्यादिभावाभावाच्च ।

---

भेदश्रुतेर्दुर्बलत्वान् नाद्वैतश्रुतिसंकोचकतेति शङ्कते---ननु भेदेति । भेदश्रुतेरतत्परत्वमङ्गीकृत्य तन्निषेधकश्रुतिन्यायानां महावाक्यशेषतया तदभावे न भेदापवादसिद्धिरित्याह---सत्यमिति । शेषिविषयन्यायानुगृहीतावान्तरवाक्येनैव महावाक्याक्षेपेऽतिप्रसङ्गमाह---अन्यथेति । उत्पत्तिवाक्ये अभीष्टं भावयेदिति विध्यर्थत्वात् तर्हि साधनतावगतिः गुरुमतेऽपि तत्रैव विश्वजिन्न्यायेनाधिकारः कल्पयितुं शक्य इति किं स्वर्गकामादिवाक्येनेत्यर्थः । अधिकारवाक्यश्रवणादेवोत्पत्तिवाक्यानां कर्मस्वरूपप्रतिपत्तिमात्रपरता तादर्थ्येन कल्प्यत इत्याशङ्क्याह---तत्र चेति । महावाक्योत्थज्ञानादेव पुरुषार्थ इत्यत्र वृहन्नारदीयवचनमुदाहरति---तदुक्तमिति । तत्त्वमादिवाक्यस्य महावाक्यत्वं न पारिभाषिकं तस्यैव फलवत्त्वेनान्यशेषित्वादित्याह---अत एवेति । महावाक्यस्याखण्डार्थत्वे बाधकाभावादुक्तहेतोरप्रयोजकतेत्याशङ्क्य निराकरोति---नाप्यप्रयोजकत्वमित्यादिना । किञ्चात्र गामानयेत्यादाविव तादात्म्यातिरिक्तसंसर्गस्य शुक्लः पट इत्यादाविव तादात्म्यरूपस्यार्थान्तरस्यासंभवात् अखण्डार्थत्वमावश्यकमित्याह---किञ्चेत्यादिना । तथाप्यभेदस्यापि संसर्गत्वात् कथं तद्विषयस्याखण्डार्थ-

न चाभेद एव संसर्गो वाक्यार्थः। भिन्नयोरभेदायोगात् स्वरूपमात्राभेदस्य संसर्गत्वाभावात्। तथा च परिशेषात् वाक्यमखण्डार्थनिष्ठमेव।

नवीनाभिप्रायनिरासः

अत्राह नवीनः--तदाश्रितत्वाज्जीवे तदिति व्यपदेशः समर्थः पदविधिरित्यत्र समर्थपदाश्रितो विधिः समर्थ इति पदेनोच्यते इति महाभाष्योक्तेः। सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः इति वाक्यशेषाच्च। अथवा ब्राह्मणोऽस्य मुखमासीत् इति वत् शरीरविशिष्टत्वेन ततो जातत्वादिति व्यपदेशः। इग्यणः सम्प्रसारणमित्यत्र काकाज्जातः काकः श्येनाज्जातः श्येनः एवं संप्रसारणाज्जातः सम्प्रसारण इति महाभाष्योक्तेः। सन्मूलाः सोम्येमाः सर्वाः प्रजा इति वाक्यशेषाच्च। अथवा 'धान्यमसि धिनुहिदेवान्' 'इत्यत्र तण्डुले धान्यशब्दवत् तदधीनत्वात् तद्व्यपदेशः। 'प्राणबन्धनं हि सोम्य मन' इति वाक्यशेषे जीवस्येश्वराधीनत्वोक्तेः यदधीना यस्य सत्ता तत्तदित्येव भण्यते इति महाभारतोक्तेश्च। अथवा अतिदेशोऽयं तद्वत्त्वमसीत्यर्थः। बहुगणेत्यादिसूत्रे बहुगणवतुडतयः सङ्ख्यावद्भवन्ति। अन्तरेणापि वतिं अतिदेशोऽवगम्यते इति महाभाष्योक्तेश्च। एवं च सत्येकस्मिन्नेव पदे लक्षणेति।

रामानुजमतानुवादः

चिरन्तनदासस्तु शरीरवाचिनां देवमनुष्यादिशब्दानां शरीरिपर्यन्तत्वदर्शनात्, जीवस्य यस्यात्मा शरीरं इत्यादिश्रुत्या ईश्वरशरीरत्वात् तत्त्वमसीति व्यपदेशः शरीरशरीरिभावनिबन्धन इत्याह। उपासना परमिति केचित्। तन्न।

---

त्वमित्यत आह--न च भेद एवेति। संसर्गत्वाभावादिति। संसर्गस्य संसर्गिभेदसमानाधिकरणत्वनियमात् तद्रहितस्य संसर्गत्वाभावादित्यर्थः। परोत्प्रेक्षितां परिशेषासिद्धिमनुवदति--अत्राहेति। तदाश्रिते तद्व्यपदेशः क्व दृष्ट इति वीक्षायामाह---समर्थ इति जीवस्य ब्रह्माश्रितत्वे किं मानं येन जीवेन व्यपदेशः स्यात् इत्यत आह---सर्वा इति। एवमुत्तरत्रापि द्रष्टव्यम्। अन्तरेणापि वतिमिति। संख्यावदिति प्रत्ययं विनापीत्यर्थः एकस्मिन्नेवेत्यर्थः। तत्पद एव सर्वत्राश्रितत्वाद्यर्थलक्षणेत्यर्थः।

जीवपरयोः शरीरशरीरिभावनिबन्धनं सामानाधिकरण्यं त्वंपदार्थस्य जीवरूपशरीरयुक्तान्तर्यामिणः तत्पदार्थेन परमात्मनाऽभेदबोधनादिति श्वेतमृत्स्नशृङ्गधारिमतं तदप्यनुवदति---चिरन्तनेति। तदाश्रितत्वात् तद्व्यपदेश इत्यत्र किं वस्तुतस्तदाश्रयत्वमभिप्रेतं उत कल्पितं? नाद्यः जीवपराभेदस्य श्रुतिस्मृतिन्यायशतसिद्धतया जीवस्य वस्तुतः पराश्रितत्वायोगात्। नापि द्वितीयः कल्पितस्य तत्त्वावेदकश्रुतिप्रमेयत्वायोगात् इत्युपपादयति---तन्न विधेरित्यादिना। आराग्रपरिमाणेति। तदत्रस्य प्रत्यक्षतया मध्यमपरि-

विधेःसमर्थपदाश्रितत्ववत् जीवस्य ब्रह्माश्रितत्वस्य वास्तवस्यासंभवात्। औपाधिको हि जीवपरयोर्भेदः "यथाह्ययं ज्योतिरात्मा विवस्वान् अपोभिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपः देवः क्षेत्रेष्वेवमजोऽयमात्मा""एकोदेवः सर्वभूतेषु गूढः इत्यादिश्रुतेः।" स एव इह प्रविष्ट" इति परस्यैव जीवभावेनानुप्रवेशश्रुतेश्च। अनुप्रविष्टोऽन्तर्याम्येव न जीवः इति चेन्न, "सवा एष भूतानि इन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्य अमूढो मूढ इव व्यवहरन्नास्ते माययैव तस्मादद्वय एवायमात्मा सन्म त्रो नित्यः" इत्यादिश्रुतिषु अनुप्रविष्टस्य मूढत्वव्यवहर्तृत्वादिश्रवणात्। न चान्तर्यामी मूढः व्यवहर्ता वा। अनेन जीवेनेत्यनुप्रविष्टे जीवशब्दप्रयोगाच्च।

जीवाणुत्वनिरासः

किञ्च न तावदणुर्जीवः। 'एष महानज आत्मा' इति श्रुतिविरोधात् आराग्रपरिमाणश्रुतिविरोधाच्च। अणुत्वे प्रत्यक्षत्वानुपपत्तेः। विरुद्धदेशे अपर्यायोत्पन्न सुखदुःखकृतिद्वयायोगाच्च इत्युक्तम्।

नापि सर्वगतः। अहमनुभवगोचरस्य सर्वगतत्वे प्रमाणाभावात्। अनुमानानां धर्मिग्राहकप्रमाणबाधात्। श्रुतेश्च ब्रह्मात्मनैव तस्य विभुत्वं प्रतीयते। अतोऽहमनुभवात् मध्यमपरिमाणो जीवः तस्य च स्वाभाविकत्वे कार्यत्वप्रसङ्गात् कृतहानादिप्रसङ्गात् विधिमोक्षशास्त्रानध्ययनप्रसङ्गाच्च औपाधिकभेदवानेव परांशो जीवः। स च भेदोऽपारमार्थिकः तदभिन्ने तद्भेदस्य तत्समानसत्त्वस्यायोगात्। तथा च कल्पितभेदवान् जीवः तेन तदाश्रितत्वमपि कल्पितमेवेति तत्परो वेदोऽप्रमाणं स्यात् बाधितार्थकत्वात्। सदायतनाः सत्प्रतिष्ठा इति वाक्येनैव तत्सिद्धेरितरवैयर्थ्यप्रसङ्गाच्च।

जीवजन्मनिरासः

एतेन तज्जातत्वमपि व्याख्यातम्। जीवस्य स्वरूपेणोत्पत्त्ययोगात्।

---

मानानां [illegible] तत्तुल्यपरिमाणबोधिश्रुतिविरुद्धपणुत्वमित्यर्थः। अपर्यायेति छेदः। अवयवभेदेन युगपदुत्पन्नयोः सुखदुःखयोः वृत्तिद्वयस्य चायोगादित्यर्थः।

धर्मिग्राहकप्रमाणबाधादिति। अहमिहैवेति धर्मिग्राहकाहंप्रत्ययेन परिच्छिन्नत्वग्रहादित्यर्थः। किं च सदायतना इत्यत्रैव स्पष्टं सद्रूपब्रह्माश्रितत्वाभिधानात् तदर्थकतत्त्वमादिवाक्यं व्यर्थं स्यात्। न च तस्यैव पुनरभ्यासः, तत्त्वमसीति बहुधाऽभेदाभ्यासवदिति वाच्यम् तत्रान्याशङ्कानिरसनपूर्वकाभ्याससंभवात् न तथाऽत्रेत्यभिप्रेत्याह— सदायतना इति। तज्जातत्वात्तद्व्यपदेश इत्यत्रापि उक्तदोषमतिदिशति—एतेनेति।

शरीरविशिष्टस्य केवलजीवादन्यत्वे तस्य तस्मादनिष्पत्तेः। अनन्यत्वेऽपि शरीरमात्रस्यैवोत्पत्तेः। सन्मूला इत्यनेनैतत्सिद्धेरितरवैयर्थ्याच्च। धान्यमसीत्यत्रापि धान्याधीनत्वं प्रतिपाद्यते विनियोगबलात् धान्यशब्देन कथञ्चित् तण्डुला एवोपस्थाप्यन्ते। तदधीनत्वस्याप्यवास्तवस्य शास्त्राप्रतिपाद्यत्वात्। वाक्यान्तरेण तस्य सिद्धत्वाच्च।

यदधीना यस्य सत्तेत्यादि भारतवचनं च तव न साधु। तदकार्यस्य जीवस्य वस्तुतो भिन्नस्य तदधीनसत्ताकत्वायोगात्। कल्पितभेदस्यैव तदधीनसत्ताकत्वात्। तद्वदित्यतिदेशोऽप्यनुपपन्नः। अतिदेशज्ञापकाभावात्। बहुगुणेत्यादिसूत्रे तु एकधैवेत्यादिवत् कतिपयेत्यादिप्रयोगसिद्ध्यर्थं वतिं विनाप्यतिदेश आदृतः। न चेह तथा किञ्चित् तेन विनाऽनुपपन्नमस्ति। न च त्वंपदमुख्यार्थलाभ एव प्रयोजनम्। त्वंपदवाच्ये श्वेतकेतौ ब्रह्मसारूप्यस्य बाधितत्वात्। न च मुक्तौ तद्वदिति वाक्यार्थः। मुक्तिवाचकपदाभावात् त्वंपदेन मुक्तिविशिष्टजीवलक्षणायां अतिदेशकल्पकाभावात्। असीति वाक्यार्थस्य वर्तमानत्वश्रुति-

---

केवलजीवस्य तस्माद्ब्रह्मणः अनिष्पत्तेः तत्र तद्व्यपदेशायोगादित्यर्थः। शरीरमात्रस्यैवेति। विशेष्यस्य जीवस्य नित्यत्वात् तत उक्तदोषादित्यर्थः। तदधीनत्वात्तद्व्यपदेश इत्यत्र परोक्तोदाहरणं तावद्दूषयति---धान्यमसीति। धान्यमसीति दृषदि तण्डुलानधिवपति इति वाक्येन धान्यमसीति मन्त्रस्य तण्डुलाधिवापे विनियुक्तत्वात् लक्षणया धान्यपदेन तण्डुलाः स्मार्यन्ते इन्द्रपदेनेव गार्हपत्यः न तु तेषां धान्याधीनत्वं तदर्थ इत्यर्थः।

पराभिन्ने जीवे वास्तवतदधीनत्वासंभवात् कल्पितमेव तत्तत्रेति न तस्यात्राभिधानमित्याह---तदधीनत्वस्येति। वाक्यान्तरेणेति। प्राणबन्धनं हि सोम्य मन इति वाक्येनेत्यर्थः। अत्र परमात्मा प्राणपदार्थः। मन उपाधिको जीवो मन इत्युक्तः। अतिदेशपक्षं दृष्टान्तवैषम्येण दूषयति---तद्वदित्यादिना। मुख्यार्थलाभ एव प्रयोजनमिति तच्चातिदेशकमिति शेषः।

तत्र किमतिदेशार्थः चतुर्भुजत्वादिसादृश्यं किं वा नित्यज्ञानादिमत्त्वं? नाद्य इत्याह---त्वंपदवाच्य इति। अतिदेशकल्पकाभावादिति। त्वंपदमुख्यार्थत्वं हि तत्कल्पकं तस्य लक्षकत्वे कुतोऽतिदेशसिद्धिरित्यर्थः। असीति पदविरोधादपि न मुक्तौ सादृश्यं तद्वाक्यार्थं इत्याह---असीति। द्वितीयमुद्भावयति---नित्यज्ञानादिमत्त्वमिति। नित्यज्ञानानन्दादेः भावरूपाविद्यातिरिक्तेनावरणायोगात्। तस्याश्च त्वयाऽनभ्युपगमात्। तवानुपलंभविरोधो दुर्निवार इति दूषयति---नाविद्यामिति। जीवाश्रितनित्यज्ञानादिकं चाविद्यमानमित्याह---जीवातिरिक्तेति।

विरोधाच्च नित्यज्ञानादिमत्त्वमतिदेशशब्दार्थः। न चानुभवविरोधः। आवृतत्वा-दिति चेत् न, अविद्यां विना प्रकाशावरणानुपपत्तेः। जीवातिरिक्तज्ञाने प्रमाणा-भावात्। जीवधर्मज्ञानस्यानित्यत्वानुभवेन बाधितत्वाच्च।

अतत्त्वमसि इति पदच्छेदनिरासः

यत्तु सत्यात्मा अतत्त्वमसीति पदच्छेदः भिन्नशकुनिदृष्टान्तबलात्। शब्दो नित्य इत्यत्र घटदृष्टान्तेनानित्य इति छेद इवेति। तत् अतिफल्गु। ईश्वर-भेदस्य प्रत्यक्षसिद्धत्वेनाजिज्ञासितस्य चाप्रतिपाद्यत्वात्। एकविज्ञानाधीनसर्व-विज्ञान-अद्वितीयत्व प्रतिज्ञा तदुपपादनाद्यनेकोपक्रमविरोधाच्च दृष्टान्तमात्रबलात् भेदोपदेशे तद्वदेव जीवस्य शकुनित्वं ब्रह्मणोऽचेतनत्वं च विवक्षितं स्यात् अन्यथा दृष्टान्तवैषम्यात् अहं ब्रह्मास्मि, तत् त्वमेव त्वमेव, तत्त्वमात्मा ब्रह्मैव ब्रह्मा-त्मैव न विचिकित्स्यं इत्यादिमहावाक्येषु त्वदुक्तकल्पनायोगाच्च। तस्मादर्वाचीन-मतमर्वाचीनमेव।

चिरन्तनदासमतनिराकरणम्

यत्तु चिरन्तनदासमतं, तत्तुच्छम् मनुष्यादिशब्दानामात्मनीव त्वंशब्दस्या-न्तर्यामिणि लक्षणा किं वा मुख्यार्थत्वमेव। नाद्यः, अन्तर्यामिलक्षणां विनाऽनुप-पत्त्यभावात्। न च ब्राह्मणादिशब्दानामपि न लक्षणेति वाच्यम्। ब्राह्मणत्वस्य तद्विशिष्टस्य वा तदर्थत्वात् शरीरातिरिक्तात्मनश्च तदुभयातिरिक्तत्वात्।

न द्वितीयः, त्वंशब्दस्य संबोध्यमात्रवाचकत्वात् अन्तर्यामिणश्च संबोध्या-

---

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं इत्युपक्रम्य ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा इत्येतेन ब्रह्मणैव सृष्ट्यादिकथनपुरस्सरं आरम्भणाधिकरणन्यायेन तस्याद्वितीयत्वं प्रतिपादितमनालोचयता नवीनेन अतिदौर्भाग्यात् तत्त्वमस्यादिवाक्योत्थमित्यादिस्मृत्या अयमात्मा ब्रह्मेति श्रुत्या च विरुद्धः पदविभागः कृतः। स चातितुच्छोऽपि दुर्जनरमणी-यत्वान्निराकार्यः इति तमनूद्य निराकरोति—यत्त्वित्यादिना। शकुनिसूत्रदृष्टान्तेति। यथाहि शकुनिः सूत्रेण प्रतिबद्ध इत्युक्तशकुनिसूत्रदृष्टान्तगतभेदबलादित्यर्थः। अतत्त्वम-सीति कल्पनामात्रान्न तवेष्टसिद्धिः। एतादृशकल्पनागन्धरहितानामभेदबोधकमहा-वाक्यानां शतशः श्रवणादित्याह—अहं ब्रह्मास्मीत्यादिना। अर्वाचीनमेवेति। निकृष्टं हेयमेवेति यावत्। शृङ्गिमतं प्रमाणयुक्तिहीनत्वादुपेक्ष्यमित्याह—यत्त्वित्यादिना। मनुष्यब्राह्मणादिपदानां आत्मनि शक्तत्वात् तेषामात्मनीव च किं त्वंपदस्यान्तर्या-मिणि लक्षणेत्युक्तमयुक्तमित्याशङ्क्याह—न च ब्राह्मणादीति। त्वंपदस्यान्तर्यामी मुख्यार्थं इति कल्पं निराकरोति—न द्वितीय इति। किञ्च जीवस्य शरीरत्वे सति तद्-

दन्यत्वात् । जीवस्य परमात्मशरीरत्वाभावाच्च । न हि जीवः परस्य भोगायतनम्। न च साक्षात्प्रयत्नाधिष्ठेयत्वात् तच्छरीरत्वं । अङ्गुल्यादेरपि साक्षात्प्रयत्नाधिष्ठेयत्वात् अन्त्यावयवित्वस्य जीवेऽभावात् । ब्रह्मणि प्रयत्नाभावाच्च । उपासनापरत्वं तु बहुधाऽऽचार्यैरेव निरस्तमिति न निराक्रियते । अतो लक्षणया सोऽयमिति वाक्यवत् तत्त्वमस्यादिवाक्यमखण्डार्थनिष्ठमिति तदर्थसाक्षात्कारान्निरतिशयानन्दब्रह्मावाप्तिरूपा मुक्तिः ब्रह्म वेद ब्रह्मैव भवतीति श्रुतेः ।

तस्मादहमनुभवगोचरातिरिक्तं अकर्त्रभोक्तृस्वभावस्वप्रकाशात्मकं अविद्यया विभक्तमिव प्रतीयमानं त्वंपदलक्ष्यमुद्दिश्यौपनिषदस्य मायया जगदुपादाननिमित्तभूतस्य वस्तुतो निर्विशेषस्य सत्यज्ञानानन्दानन्तात्मनः तत्पदलक्ष्यस्य स्वरूपमात्राभेदो महावाक्येन प्रतिपाद्यत इति सिद्धम् ।

श्रुतिरयमिति वक्तुं यन्न शक्नोति यस्मिन्
वटतरुतलवासी मौनमास्ते महीयान् ।
अतुलनिजविभूतेस्तस्य देवस्य भूयात्
नरमृगवपुषोऽयं प्रीतयेऽद्वैतदीपः ॥ १ ॥

---

वाचकपदस्य तद्युक्ते शरीरिणि प्रवृत्तिः । न च तदस्ति जीवे शरीरलक्षणाभावादित्याह—जीवस्येति ।

ननु साक्षात्प्रयत्नजन्यव्यापारवत्त्वमेव शरीरलक्षणं तच्च जीवेऽप्यस्ति तस्यापि साक्षादीश्वरप्रयत्नाधिष्ठेयत्वादित्याशङ्क्याह—न च साक्षादिति । अङ्गुल्यादेरपीति । तथा च शरीरतदवयवयोः भेदात् अवयवेऽतिव्याप्तिरित्यर्थः । अन्त्यावयवित्वे सतीति विशेषणान्नोक्तदोष इत्याशङ्क्याह—अन्त्यावयवित्वस्येति । औपनिषदत्ववादे ब्रह्मणि नित्यस्य चानित्यस्य च प्रयत्नस्य निरासाच्च न तत्प्रयत्नाधिष्ठेयता जीवस्येत्यभिप्रेत्याह—ब्रह्मणीति । महावाक्यानामर्थान्तरानिरूपणात् पारिशेष्यादखण्डार्थत्वं सिद्धमित्याह—अत इति । वादिविप्रतिपत्तिनिराकरणेन वेदान्तानामखण्डार्थत्वनिर्धारणं नास्य प्रकरणस्य परमप्रयोजनमाह—इति तदर्थेति । परिच्छेदचतुष्टयस्यैकवाक्यतां दर्शयन् तदर्थमुपपादितमुपसंहरति—तस्मादिति ।

यतः ईश्वरप्रीत्यर्थं एव स्वधर्मः वीर्यवत्तरो भवति अतो मननात्मकस्वधर्माचरणरूपग्रन्थमीश्वरे समर्पयति—श्रुतिरयमिति । निरपेक्षश्रुतिरपि अयमिति अमुकस्वरूप इति वक्तुं शक्त्या बोधयितुं न शक्नोति । यस्मिन् विषये महीयान् महेश्वरोऽपि वक्तुमसमर्थः वटतरुमूलमाश्रित्य मौनं यथा तथाऽऽस्ते अतः अतुलनिजविभूतेः निरतिशयस्वाभाविकमहिमापन्नस्य नरमृगवपुषः प्रत्यक्पराभिन्नाखण्डचिद्रूपस्य प्रीतये अयं अद्वैतदीपो भवत्वित्यर्थः ।

कृतिरियममरेन्द्रोन्निद्रमौलिप्रभौघ—
प्रमुदितपदपीठश्रीपतेरेव विष्णोः ।
न मम निमेषेऽप्यप्रभोरक्षताऽस्तु
स्फुटबहुविकृतिर्वा नात्र मे किञ्चिदेनः ॥ २ ॥

कियदपि परिपीतं यत् कदाचित् प्रसङ्गात्
विमलपदसरोजक्षालनाम्भो गुरोर्नः ।
शमयति हृदि तापं वर्धयत्यात्मविद्या
जलनिधिमपि विष्णौ भक्तिमेतद्विधत्ते ॥ ३ ॥

अहं कियानेव गुरोः प्रसादः क्वचाऽमरेन्द्रैर्मनसाप्यलभ्यः ।
प्रसादिते देववरे मुरारौ न किञ्चिदप्राप्यमिहेति मन्ये ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यभगवज्जगन्नाथाश्रमशिष्य-
श्रीमन्नृसिंहाश्रमकृतौ अद्वैतदीपिकायां
चतुर्थः परिच्छेदः

---

अस्मिन् ग्रन्थे शब्दतोऽर्थतो वा दोषप्रतीतावपि (तेरपि) न मय्यपराधो मन्तव्यः ईश्वरस्यैवात्र स्वतन्त्रतया तत्कर्तृत्वाच्च । मया च तत्प्रेरणयैव प्रतिपदं प्रवृत्तत्वात् । ततश्चैतस्य स्तुत्या निन्दया वा न मम हर्षादिरिति शमं दर्शयति—कृतिरियमिति । निर्मलप्रकाशत्वमुन्निद्रपदार्थः ।

अमरेन्द्राणामुन्निद्रमौलिप्रभायाः ओघः प्रमुदितः नमस्कारकाले तिरस्कृतो येन तादृशं पदपीठं यस्य तस्य श्रीपतेरित्यर्थः । अप्रभोः असमर्थस्य अक्षता निर्दोषा स्फुटबहुविकृतिः स्वस्वानेकदोषयुक्ता वाऽस्तु । अत्र मे न किञ्चिदेनः अवद्यमित्यर्थः ।

नानावादिनिराकरणेन स्वमतनिष्कर्षहेतोः ग्रन्थस्य गुर्वनुग्रहादेव समाप्तत्वात् गुरुमभिपूजयति—कियदपीति । ईषदपीत्यर्थः । तदपि न श्रद्धया किन्तु निमित्तान्तरादित्याह—प्रसंगादिति । यदंभः परिपीतं एतच्छमयतीत्यन्वयः । अन्येषां किमित्येतादृशगुर्वनुग्रहो नेति शङ्कां निराकुर्वन् तस्येश्वरप्रसादलभ्यतयाऽतिदुर्लभतामाह—अहमिति ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यभगवन्नृसिंहाश्रमपूज्यपादशिष्य नारायणाश्रम-
विरचिते अद्वैतदीपिकाविवरणे आनन्ददीपिकाख्यः
चतुर्थः परिच्छेदः



## चतुर्थपरिच्छेदे मुद्रणाशुद्धिपरिहारः

| | पृ० | पृ॰ |
|---|---|---|
| ब्रह्मवाच्यमेव—इति पठनीयम् | २ | २ |
| ब्रह्मजात्याद्याधारव्यक्ति | ३ | ९ |
| निषेधेन | ४ | ८ |
| निमित्ताभावात् न | ५ | ७ |
| निरस्तत्वात् | ६ | १ |
| लक्ष्यमेव | ६ | ५ |
| वाच्यसंबन्धितया | ७ | २१ |
| अपर्यवसानालभ्यस्य | ७ | उपान्त्ये |
| नुपलम्भात् | ८ | टी. ४ |
| तथाचेति | ८ | ८ |
| लाक्षणिकेति | ८ | १७ |
| आशङ्कायामाह | ८ | १८ |
| मुख्यार्थान्वयत्वात् | ९ | टी. |
| लक्ष्यपद | १२ | २२ |
| प्रश्नोत्तरेषु | २५ | १२ |
| प्रकृष्टप्रकाशो | २६ | - १२ |
| जिज्ञासितत्वादिति | ३२ | १० |
| एकस्मादिति | ३२ | टी. १० |
| जिज्ञासिता | ३४ | १४ |
| तादस्मात्राम्न | ३४ | टी. ३ |
| तद्ब्रह्म-ब्रह्मैवेद | ४४ | २ |
| एकधैव | ४५ | ८ |

| | | |
|---|---|---|
| निर्विशेगषरता | ४८ | १० |
| अनुमानाद्वाशङ्गु | ४९ टी. | |
| अन्यूनानतिरिक्त | ५२ | ६ |
| एवेदन्त्वधीः | ५२ | ७ |
| कृतिरिय | ६३ | १ |
| तत्कर्तृत्वाच्च | ६१ टी. | २ |



| | | |
|---|---|---|
| निर्विशेगषरता | ४८ | १० |
| अनुमानाद्वाशङ्कु | ४९ टी. | |
| अन्यूनानतिरिक्त | ५२ | ६ |
| एवेदन्त्वधीः | ५२ | ७ |
| कृतिरिय | ६३ | १ |
| तत्कर्तृत्वाच्च | ६१ टी. | २ |



